

ISSN: 0587-1646

# अन्वीक्षा

# ANVĪKṢĀ

RESEARCH JOURNAL
THE DEPARTMENT OF SANSKRIT
[Peer Reviewed Journal]

**Volume: XLV**

General Editor
**Prof. Tapan Sankar Bhattacharyya**

Joint Editor
**Prof. Kakali Ghosh**

**JADAVPUR UNIVERSITY**
**Kolkata 700032**

**December 2023**

যাদবপুর বিশ্ববিদ্যালয়
কলকাতা-৭০০০৩২, ভারত
ফোন : ২৪১৪-৬১১৫



JADAVPUR UNIVERSITY
KOLKATA-700 032, INDIA
Telephone : 2414-6115

FACULTY OF ARTS, DEPARTMENT OF SANSKRIT

*Ref. No.* ............................ *Date* ................................

# GENERAL EDITOR'S NOTE

We are extremely delighted to announce that the latest online issue of *Anvīkṣā* (Vol. XLV), the trilingual research journal of the Department of Sanskrit, Jadavpur University is ready for publication before our estimable readers. From the beginning of its journey, the journal used to be published in printed form only. It's a matter of great pride for our department that our departmental journal has started its journey through online mode along with its printed form in 2022.

The online edition of the journal has been appeared with the combined effort of Prof. Kakali Ghosh and all the honourable teachers of our department. Now, it will be available in both online and print version. We candidly admit that the demand of the age is irresistible. So, we believe the online version of the journal will fulfill the need of the present generation. I particularly acknowledge the names of Prof. Ashok Kumar Mahata, Prof. Shiuli Basu, Dr. Debdas Mandal, Dr. Chinmay Mandal and Dr. Bikash Sardar for their special contribution in continuing the heritage of this journal.

We observe that the valuable research articles of famous writers have enhanced the quality of the journal for a long time. Side by side, we believe that the modern generation can show the new direction of advancement certainly. That is why, we would like to inspire the young scholars for their endeavor through deliberative contributions. Therefore, we have increased the number of pages to encourage the young writers in the field of Sanskrit studies.

The present issue of our journal contains valuable articles written by the scholars and academicians specialized in their concerned fields of various renowned educational institutions. I hope that the readers will also participate with us through their valuable opinions and suggestions to complete the endeavor of the Department of Sanskrit.

I humbly pray to the almighty God for the prosperity of this departmental journal in future.

"तेजस्वि नावधीतमस्तु"

December 20, 2023

Tapansankar Bhattacharyya

Dr. Tapan Sankar Bhattacharyya
Professor & Head of the Department of Sanskrit
Jadavpur University, Kolkata 700 032

যাদবপুর বিশ্ববিদ্যালয়
কলকাতা - ৭০০০৩২, ভারত
ফোন: ২৪১৪-৬১১৫



JADAVPUR UNIVERSITY
KOLKATA-700 032, INDIA
Telephone : 2414-6115

FACULTY OF ARTS, DEPARTMENT OF SANSKRIT

Ref. No. ...........................   Date ................................

# JOINT EDITOR'S NOTE

The crowning glory of India, our beloved motherland, is its intellectual excellence and tireless pursuit of truth, which has no parallel in the world. It has charmed the inhabitants of the farthest corner of the earth with the sublime fragrance of wisdom; and as such, inquisitive and creative minds are not only attracted but are irresistibly drawn towards it. Amidst the gloom looming large in the socio-political scenario, the remarkable prosperity of our nation is unmistakably observed. India excels in every sphere of human life. It is no less remarkable that people from our country have set foot on the virgin soil of the moon, not with the spirit to conquer, but with the sincere intent to expand the horizons of knowledge. The proliferation of science and technology in our country has not only captivated every aspect of human life but brought about immense transformation. It is arguably true that this stupendous array of achievements is not merely a product of technological prowess, but it is the outcome of the unfolding of the power of intellect guided by the sublime spirit of inquiry. Therefore, nurturing intellectual potential in every individual in an appropriate spirit is the primary work that demands earnest and sincere involvement. The end and aim of all academic pursuits is to facilitate the unfolding of the intellectual genius of every individual, which can be mapped with the ‘manifestation of perfection already in man’. *Anvīkṣā* is not to be construed as a platform to showcase naive creations but is a cradle to foster the budding potential of sincere aspirants augmenting their intellectual ability.

This volume of *Anvīkṣā*, which is an esteemed research journal in the field of Sanskrit and Indic studies, is a piece of work by the department towards unravelling the new vista knowledge. Serious scholars, acclaimed intellectuals, dedicated researchers, and sincere students have contributed to enhancing its merit.

This volume comprises three sections. In Section A, invited research articles from distinguished scholars of various reputed institutions have been compiled. Section B consists of the peer reviewed articles of teachers of several educational institutions. Section C is containing the peer reviewed articles of MPhil and PhD research scholars and students of graduation and post-graduation classes.

I shall deem this work to be amply rewarded if it enthralls the hearts of the appreciative readers.

Kakali Ghosh.

December 20, 2023

Dr. Kakali Ghosh
Professor, Department of Sanskrit
Jadavpur University, Kolkata 700 032

# CONTENTS

## SECTION A

## SECTION B

## SECTION C

# न्यायभाष्यदिशा शब्दस्य नित्यत्वानित्यत्वविचारः

तपनशङ्कर-भट्टाचार्य्यः

**सारसंक्षेपः**

न्यायदर्शनस्वीकृतेषु चतुर्विधेषु प्रमाणेषु शब्दोऽन्यतमः। महर्षिगौतमकृतं शब्दप्रमाणात्मकं न्यायसूत्रं तावत् - 'आप्तोपदेशः शब्दः'। नैयायिकाः शब्दस्य अनित्यत्वं स्वीकुर्वन्ति। वैयाकरणाः मीमांसकाश्च शब्दस्य नित्यत्वं स्वीकुर्वन्ति। शाब्दबोधे पदज्ञानं करणम्, व्यापारश्च पदजन्यपदार्थस्मरणम्। शब्दानित्यत्वविषये न्यायसूत्रं खलु 'आदिमत्त्वाद् ऐन्द्रियकत्वात् कृतकवदुपचाराद्।' श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। शब्दत्वं जातिः प्रत्यक्षसिद्धा, शब्दः सर्वोऽपि अनित्यः अव्याप्यवृत्तिश्च। स ध्वनिवर्णभेदेन द्विविधः। तत्र शब्दो नित्योऽनित्यो वा इत्यस्मिन् विषये बहुविधो विचारो दृश्यते। भाष्यकारेण वात्स्यायनेन शब्दस्य नित्यत्वानित्यत्वविचारे यदालोचनं कृतं तन्मया निबन्धेऽस्मिन् समासेन प्रतिपादितम्।

**कुञ्चिकाशब्दः**

प्रमाणम्, शाब्दः, नित्यत्वम्, अनित्यत्वम्, उत्पत्तिधर्मकः, अनुत्पत्तिधर्मकः।

अतिगहनं न्यायशास्त्रम्। अतिगम्भीराणि *न्यायसूत्राणि*। सूत्रकारः अक्षपादः, भाष्यकारः वात्स्यायनः। प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानाद् निःश्रेयसाधिगमो भवति इति सूत्रकारेणैव उक्तम्। तथा च सूत्रम्- 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयाधिगमः।'[१] प्रमेयाः द्वादशविधाः। नीयन्ते प्राप्यन्ते विवक्षिताः अर्थाः येन स न्यायः इति व्युत्पत्तिनिमित्तार्थः। अयं न्यायशब्दः यौगिकरूढोऽपि भवति – इति भाष्यकाराः वदन्ति। 'प्रमाणैरर्थपरीक्षणं न्यायः।'[२] तात्पर्यटीकाकारेण उक्तम् – 'प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि तैरर्थस्य लिङ्गस्य परीक्षणं परीक्षा।'[३] पञ्चरूपः चतूरूपो वा हेतुर्न्यायः। प्रतिज्ञाद्यवयवसमूहो वा न्याय इति। न्यायदर्शनमेव आन्वीक्षिकी। अत एव भाष्यकारेण वात्स्यायनेन उक्तम् –

> प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
> आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता॥[४]

प्रमेयभूतस्य अर्थस्य सिद्धिः प्रमाणाधीना एव भवति। सांख्यकारिकायामुक्तम् – 'प्रमेयसिद्धिः प्रमाणाद्धि।'[५] माधवाचार्यविरचितस्य सर्वदर्शनसंग्रहग्रन्थस्य अक्षपाददर्शने उक्तम् - 'मानाधीना मेयसिद्धिरिति।'[६] नैयायिकाः चत्वारि प्रमाणानि स्वीकृतानि। 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[७] - इति न्यायसूत्रम्। नैयायिकाः शब्दप्रमाणं स्वीकुर्वन्ति। चार्वाकाः बौद्धाः वैशेषिकाश्च शब्दस्य पृथक्प्रामाण्यं न स्वीकुर्वन्ति। 'आप्तोपदेशः शब्दः'[८] इति न्यायसूत्रम्। तत्र आप्तशब्दस्य अर्थः भाष्यकारेण उक्तः 'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा।'[९] आप्तस्य उपदेशः = आप्तोपदेशः। साक्षात्कृतः = साक्षाद्-दृष्टः धर्मः तत्त्वं येन, स साक्षात्कृतधर्मा। चिख्यापयिषया = जिज्ञापयिषया प्रयुक्तः = प्रवर्त्तितः उपदेष्टा = यथोपदेशकर्ता। 'स द्विविधो दृष्टादृष्टार्थत्वात्'।[१०] सः = प्रमाणरूपः शब्दः द्विविधः = दृष्टार्थकः अदृष्टार्थकश्च। दृष्टः अर्थः यस्य सः दृष्टार्थकः शब्दः। अदृष्टः अर्थः यस्य सः

अदृष्टार्थकः। दृष्टार्थकस्य शब्दस्य उदाहरणं यथा घटपदादिः। अदृष्टार्थकस्य उदाहरणं तावत् स्वर्गापवर्गादि। अर्थात् यस्य अमुत्र प्रतीयते सः अदृष्टार्थः। अनेन आर्षवाक्यानां लौकिकवाक्यानाञ्च विभागः कृतः। अत्र भाष्यकारेणोक्तम् –

> किमर्थं पुनरिदमुच्यते? स न मन्येत दृष्टार्थ एवाप्तोपदेशः प्रमाणम्, अर्थस्य अवधारणादिति, अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति।[११]

अत्र प्रमाणभूतशब्दस्य द्वैविध्यमाह सूत्रकारः। स शब्द आप्तोपदेशो द्विविधः, दृष्टार्थोऽदृष्टार्थश्च। तत्र दृष्टार्थो यथा 'घटमानय' इत्यादिस्तदर्थस्य घटादेर्दृश्यमानत्वात्। अदृष्टार्थो यथा - 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिस्तदर्थस्य स्वर्गादेरदृश्यमानत्वादिति सूत्रार्थः। अनेकविधमपि शब्दं द्विधा विभजते नियमार्थम्। स द्विविधो दृष्टादृष्टार्थत्वात्। दृष्टः अर्थो यस्य स दृष्टार्थकः शब्दः। न दृष्टो (अनुमितः) अर्थो यस्य सः अदृष्टार्थः शब्दः। न तु शब्दप्रमाणं द्विविधम्, अपि तु शब्दो द्विविधो भवति, अर्थात् प्रमाणभूतशब्दो द्विविधो भवति। अत एव भाष्यकारेण उक्तम् - 'एवमृषिलौकिकवाक्यानां विभाग इति।'[१२] एतेन प्रतीयते यद् दृष्टार्थ एव आप्तोपदेशः प्रमाणम्, अर्थस्य दृष्टत्वात्, अदृष्टार्थोऽपि प्रमाणम् अर्थस्य अनुमानात्। एतद्विषये अन्नंभट्टेन *तर्कसंग्रह*ग्रन्थे उक्तम् –

> वाक्यं द्विविधं वैदिकं लौकिकञ्च, वैदिकम् ईश्वरोक्तत्वात् सर्वमेव प्रमाणम्, लौकिकं त्वाप्तोक्तं प्रमाणम्। वाक्यार्थज्ञानं शाब्दज्ञानं तत्करणञ्च शब्दः।[१३]

शाब्दबोधरूपकार्यं प्रति पदज्ञानं करणं भवति, पदजन्यपदार्थस्मरणं व्यापारो भवति, तत्रापि वृत्त्या पदार्थस्मरणं बोध्यं भवति। अत एव कारिकावल्यां विश्वनाथेनोक्तं –

> पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
> शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥[१४]

वृत्तिज्ञानसहकारेण पदज्ञानजन्यपदार्थोपस्थितिरेव शाब्दबुद्धौ कारणत्वं भवति। सा च वृत्तिः शाब्दबोधानुकूलपदपदार्थयोः शक्तिलक्षणान्यतररूपा भवति। शक्तिस्तावत् 'इदं पदम् अमुमर्थं बोधयतु इतीश्वरसंकेतरूपा'[१५] अथवा 'अस्मात् पदादयमर्थो बोद्धव्यः'[१६] इतीश्वरसंकेतरूपा। अर्थाद् अत्र पदविशेष्यिका अर्थविशेष्यिका च भवति। प्रथमवाक्यस्य अर्थात् पदविशेष्यकवाक्यस्य शाब्दबोध एवं भवति एतदभिन्न-अर्थजनकबोधविषयत्वनिष्ठ-प्रकारतानिरूपित-ईश्वरेच्छीयविशेष्यतावत् पदम्। अत्र पदविशेष्यक-अर्थप्रकारक-इच्छा भवति। द्वितीयवाक्यस्य अर्थाद् अर्थविशेष्यकपदप्रकारकस्य वाक्यस्य शाब्दबोध एवं भवति एतदभिन्नपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपित-ईश्वरेच्छीयविशेष्यतावान् अर्थः। नव्यन्यायमते ईश्वरेच्छा न संकेत अपि तु इच्छैव।

अधुना विचार्यते न्यायमते शब्दो नित्यः, अनित्यो वा। वैयाकरणाः 'शब्दो नित्यः' इति स्वीकुर्वन्ति। श्रोत्रेन्द्रियजन्य-प्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। शब्दत्वं जातिः प्रत्यक्षसिद्धा, शब्दः सर्वोऽपि अनित्यः अव्याप्यवृत्तिश्च। स ध्वनिवर्णभेदेन द्विविधः। दण्डभेरीसंयोगेन अर्थाद् अभिघातेन ध्वनिरुत्पद्यते। वर्णस्तु कण्ठसंयोगादिजन्यः स्फुटः कथादिरूपः। उभयविधशब्दः समवायसम्बन्धेन आकाशे वर्तते। तदाह *भाषापरिच्छेदे* विश्वनाथन्यायपञ्चाननः -

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः॥[१७]

महाभाष्यस्य प्रथमाह्निके 'किं पुनर्नित्यः शब्दः, आहोस्वित् कार्य्यः'[१८] इत्युपस्थाप्यते विचारः। 'प्रागभावप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्'[१९] इति नित्यलक्षणम्। ध्वंसे अतिव्याप्तिवारणाय सत्यन्तं लक्षणे उक्तम्, प्रागभावप्रतियोगित्वस्य ध्वंसे अभावान्नातिव्याप्तिः। प्रागभावाप्रतियोगित्वमात्रोक्तौ प्रागभावे अतिव्याप्तिः स्यात्, तद्वारणाय ध्वंसाप्रतियोगित्वम् इति लक्षणे उक्तम्। अनित्यत्वं च 'प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वम्।'[२०] *महाभाष्य*कारेण नित्यलक्षणम् उक्तम् - 'ध्रुवं कूटस्थमविचाल्यनपायोपजन-विकार्य्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यम्। तद् नित्यं यस्मिंस्तत्त्वं न विहन्यते।'[२१] 'अत्र पारमार्थिकं नित्यं खलु शब्दब्रह्म, व्यवहारिकं नित्यं तावत् आकाश-कालादिकम्, प्रवाहनित्यं तावत् गोत्वं जातिः। एवम् अवयवसंस्थानमपि प्रवाहनित्यं भवति। संस्थानत्वावच्छिन्नव्यक्तीनामन्यतमया व्यक्त्या विना अनादिकालस्यावर्तनम् एव संस्थानस्य प्रवाहनित्यता'। वैयाकरणमते स्फोटात्मकशब्दो नित्यः। 'अन्ये वर्णव्यतिरिक्तं पदस्फोटम् इच्छन्ति, वाक्यस्फोटमपरे संगिरन्ते'[२२] इति वैयाकरणसिद्धान्तोपन्यासः कैयटकृतः। वस्तुतः वाक्यस्फोटः एव मुख्यः। गौरित्युक्ते सति क्रमोच्चारितानां गकारौकारविसर्जनीयानां समुदाय एवार्थप्रत्यायकं पदस्वरूपम् उत वा अन्यत् किञ्चिदत्र शब्दस्वरूपमस्तीति जिज्ञासायां वैयाकरणसिद्धान्तभूतं स्फोटात्मकं शब्दस्वरूपम् अवतारयितुं प्रश्नोऽयं प्रवर्त्तते *महाभाष्ये* - 'अथ गौरित्यत्र कः शब्दः' इति।[२३] तत्र कैयटेन नैयायिकमतं मीमांसकमतञ्च निरस्य स्वमतं वक्तुं यथोपक्रान्तं तथास्माभिः प्रपञ्चयिष्यते। 'उच्चारितध्वनिसमुदाय एव शब्दः'[२४] इति यदुक्तं नैयायिकैस्तत्र वैयाकरणा आहुः – उच्चारितविध्वस्तानां क्षणस्थायिनां वर्णानां समुदायीकरणासम्भवाद् न ध्वनिसमुदाय एव शब्दः। तथा हि न्यायमतं न ग्राह्यम्, विकल्पासहत्वात्। शब्दोच्चारणात् प्राग् वक्तुर्बुद्धावखण्डो निष्क्रमः कश्चित् सामान्यभूतो गोशब्दः समारूढो वर्तते। स एव शब्दः क्रमोच्चारितैर्ध्वनिभिः क्रमेण स्फुट्यत अभिव्यज्यत इति स्फोटात्मको बोद्धः शब्द एव वाचकः। सोऽयं स्फोटवादः 'तपरस्तत्कालस्य'[२५] इति सूत्रभाष्ये सम्यगालोचितः। तथा च भाष्यम् – 'एवं तर्हि, स्फोटः शब्दः। ध्वनिः शब्दगुणः।'[२६]

मीमांसका अपि शब्दनित्यत्ववादिनः। शब्दार्थसम्बन्धनित्यत्वप्रतिपादनपरा भाष्यकाराः शबरस्वामिनः शब्दार्थस्य च नित्यत्वं प्रतिपादयन्ति। शब्दस्य अनित्यत्वे पुनर्वेदस्याप्यनित्यत्वं दुर्वारं प्रसज्यते, अतो वेदस्य नित्यत्वं प्रामाण्यञ्च रक्षितुमनसो मीमांसका बहुमन्यन्ते शब्दनित्यत्वम्। अत एव आहुः भट्टपादाः श्लोकवार्त्तिके –

तस्माद् वेदप्रमाणार्थं नित्यत्वमिह साध्यते।[२७]

अत्र नित्यता हि शब्दानाम् अनादिवृद्धव्यवहारप्रसिद्ध्या प्रवाहनित्यतयैव सिद्धा।

केचन नैयायिकादयो वाचकावाचकाविशेषेण सर्वेषां शब्दानाम् अनित्यत्वमेव अभ्युपगच्छन्ति। तथा च न्यायसूत्रम् – 'आदिमत्त्वाद् ऐन्द्रियकत्वात् कृतकवदुपचाराद्'।[२८] सूत्रस्यायमभिप्रायः - आदिमत्त्वेन सकारणकत्वमुच्यते। इन्द्रियवत्त्वं लौकिकप्रत्यासत्तिजन्यप्रत्यक्षग्राह्यत्वम्। भवति च शब्दविषये कृतकवदुपचारः, व्यवहार इत्यर्थः। यथा हि सुखदुःखयोः कृतकयोरेवं प्रवर्तते व्यवहारः – तीव्रं सुखम्, तीव्रं दुःखम्, मन्दं सुखम्, मन्दं दुःखमिति तथैवोपचर्यते शब्दम् अपि समधिकृत्य तीव्रः शब्दः, मन्दः शब्द इति। हेतुत्रयादेतस्मात् सिध्यत्येवानित्यत्वं शब्दस्य। यस्माच्छब्द आदिमान् कारणैर्जन्यते, यस्मात् स विषयी भवति श्रवणेन्द्रियप्रत्यासत्तिजन्यलौकिकप्रत्यक्षस्य, यस्माच्च भवति तत्र कृतकेषु इव अस्माकं व्यवहारः, तस्मादनित्यः शब्द इति सूत्रार्थनिष्कर्षः। न्यायभाष्यकारेणोक्तम् – 'आप्तोपदेशः

शब्दः।'[२९] इति प्रमाणभावे विशेषणं ब्रुवता 'नानाप्रकारः शब्दः इति ज्ञाप्यते, तस्मिन् सामान्येन विचारः – किं नित्योऽथानित्यः?' तत्र भाष्ये आदौ प्रभाकरमतम् उल्लिखितम् शब्दनित्यत्वम्। 'आकाशगुणः शब्दो विभुर्नित्येऽभिव्यक्तिधर्मक इत्येके।' प्रभाकरमतं तावत् –

> एषा शालिकनाथेन शब्दनित्यत्वसाधनी।
> प्रभाकरगुरोर्दृक्ष्या न्यायशुद्धिः परीक्षिता॥[३०]

अनेन शब्दस्य नित्यत्वमुक्तम्। सांख्यमतमाह - गन्धादीति। यत्र गन्धादयो वर्तन्ते तत्रैव शब्दोऽपि पृथिव्यादिषु वर्त्तते शब्दस्पर्शादीनामुत्तरोत्तरभूतेषु सत्त्वस्वीकारात् गन्धादिवद् अवस्थितः सन्नेव अभिव्यक्तिधर्मकः। वैशेषिकमते शब्द उत्पत्तिविनाशवान्। अत एव शब्दोऽनित्यः। शब्दस्य अनित्यत्वपक्षे न्यायसूत्रं तावत् – 'आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्चा।'

उत्पत्तिमत्त्वाद् अनित्यः शब्दः, उत्पत्तिमतोऽनित्यत्वनियमात्। अधुना जिज्ञासा जायते शब्दे कथम् उत्पत्तिमत्त्वं वर्तते। तत्र उत्तरसूत्रे एव वर्तते 'ऐन्द्रियकत्वात्'। अर्थाद् इन्द्रियग्राह्यत्वाद् अनित्यः शब्दः, इन्द्रियग्राह्यस्य अनित्यत्वनियमात्, यथा रूपादयः।

अयं नियमः न युक्तः, सामान्यादौ व्यभिचारात्। तत्र सूत्रकारेण उक्तम् - 'कृतकवदुपचारात्।' अनित्यपदार्थसदृशत्वात् शब्दः अनित्यः। यथा - तीव्रं दुःखम्, मन्दं दुःखम् – इत्यादिषु अनित्यं दुःखम् उपचर्यते। एवं तीव्रः शब्दः, मन्दः शब्द इति उपचर्यते, एवम् उपचारात् शब्दस्य अनित्यत्वं सिद्धम्। अर्थाद् अत्र तीव्रत्वादिधर्माणां नित्येषु अस्मभवात्। आदिमत्त्वाद् अर्थात् कारणवत्त्वात् शब्दः अनित्यः। आदीयते उत्पाद्यते अस्मात् = आदिः = कारणम्। कारणवद् अनित्यं भवति। यथा घटादयः। उत्पत्तिधर्मकत्वाद् अनित्यः शब्दः। भूत्वा न भवति = विनाशधर्मकः। द्वितीयो हेतुः सांशयिक इति। उत्पत्तिकारणं संयोगविभागौ शब्दस्य। 'आहोस्विद् अभिव्यक्तिकारणम्।'[३१] संयोगविभागयोः शब्दाभिव्यक्तिकारणत्वस्यापि संभवात् शब्दस्य उत्पत्तिकारणत्वं सांशयिकमेव। एतेन शब्दस्य अनित्यत्वं न आपद्यते – इति जिज्ञासायामुच्यते ऐन्द्रियकत्वात्। इन्द्रियस्य प्रत्यासत्तिः अर्थात् संयोगः। इन्द्रियग्राह्यश्च अनित्यो भवति। यथा घटादिरिति। अत एव शब्दोऽपि अनित्य इन्द्रियग्राह्यत्वात्। शब्दस्य ग्राह्यत्वमुक्तम्। तत्र इन्द्रियेण शब्दग्रहणप्रकारजिज्ञासार्थो द्विधा विकल्पयति। तत्र भाष्यकारेण जिज्ञासा कृता, किम् अयं शब्दः व्यञ्जकेन अर्थात् संयोगादिना, किं यत्र संयोगादि भवति अर्थात् तत्र शब्दोऽभिव्यज्यते, यथा रूपादिकं प्रकाशदेशस्थम् अभिव्यज्यते इति प्रथमपक्षः। अथवा भेरीदण्डादिसंयोगेन यः शब्द उत्पन्नः ततः उत्तरोत्तरं शब्दे उत्पन्ने सति श्रोत्रं प्राप्तः अर्थात् शब्दो गृह्यते इति द्वितीयपक्षः।

भाष्यकारेण उक्तम् - 'तच्च भूत्वा न भवति आत्मानं जहाति निरुध्यत इत्यनित्यम्।' 'तच्च भूत्वा न भवति' इत्यंशेन अनित्यत्वं प्रतिपादयति। 'भूत्वा न भवति' इत्यनेन न्यायमते असत्कार्यवादस्य सूचना जाता। उत्पन्नात् परं विनष्टो भवति। 'आत्मानं जहाति', 'निरुध्यते' इति वाक्यद्वयं 'भूत्वा न भवति' इति वाक्यस्य विस्तारमात्रम्। 'शब्दः अनित्यः' इत्यनेन शब्द उत्पन्नो भूत्वा न विद्यते। शब्दो विनाशधर्मकः। यस्य उत्पत्तिर्भवति स उत्पत्तिधर्मकः। यस्य विनाशो भवति स विनाशधर्मकः। अत एव शब्द उत्पत्तिधर्मकः विनाशधर्मकश्च। 'कारणवत्त्वात्' इति हेतुवाक्यम्, 'शब्दः अनित्यः' इति प्रतिज्ञावाक्यम्। मीमांसकाः शब्दस्य उत्पत्तिं न स्वीकुर्वन्ति। एतेषां मते संयोगेन विभागेन च पूर्वस्थितस्य नित्यशब्दस्य अभिव्यक्तिर्भवति, शब्द उत्पन्नो न भवति। विप्रतिपत्तिवशात् संयोगः विभागश्च शब्दस्य उत्पादकः

अभिव्यञ्जको वा इत्यस्य सन्दिग्धत्वाद् उत्पत्तिधर्मकत्वं सन्दिग्धमेव। सन्दिग्धपदार्थः साध्यसाधको न भवति। अत एव हेतुरपि न भवितुमर्हति। अत एव भाष्यकारेणोक्तम् 'ऐन्द्रियकत्वात्, 'कृतकवदुपचारात्'। विश्वनाथादयः नव्यनैयायिकाः अपि सूत्रोक्तं हेतुत्रयमेव शब्दस्य अनित्यत्वसाधकम् इति वदन्ति। किन्तु भाष्यकारः द्वितीयं तृतीयं हेतुञ्च प्रथमहेतोः अर्थाद् उत्पत्तिधर्मकत्वस्य समर्थक इति वदति।

इन्द्रियसन्निकर्षेण एव शब्दस्य ज्ञानं भवति, अत एव स शब्दः ऐन्द्रियक इति। शब्दो यथा ऐन्द्रियकपदार्थो भवति तथैव स शब्दः अभिव्यक्तिधर्मको न भवति। अत एव स उत्पत्तिधर्मकः। शब्दो यदि अभिव्यक्तपदार्थस्तर्हि स शब्दः श्रवणेन्द्रियसन्निकर्षो न भवितुमर्हति। श्रवणेन्द्रियम् अमूर्त्तपदार्थः, अत एव स कदापि शब्दस्थाने गन्तुं न शक्यते। शब्दस्य उत्पत्तिस्वीकारे शब्दो वीचितरङ्गन्यायेन शब्दान्तरं जनयति। अर्थाद् आकाशे समवायेन उत्पन्नस्य शब्दस्य धारावाहिकोत्पत्त्या कर्णात्मकाकाशे समुत्पन्नस्य प्रत्यक्षं भवति, सजातीयशब्दोत्पत्तिस्तु द्विधा भवति वीचितरङ्गवत् कदम्बपुष्पमञ्जरिवच्च निमित्तपवनेन भवति। अत एव *भाषापरिच्छेदे* उक्तम् –

> कन्ठसंयोगादिजन्या वर्णास्ते कादयो मताः।
> सर्वः शब्दो नभोवृतिः श्रोत्रोत्पन्नस्तु गृह्यते॥
> वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता।
> कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते॥[३२]

अत एव शब्दो न अभिव्यक्तिधर्मकः। अपि तु शब्द उत्पत्तिधर्मकः। यथा ध्वनिरूपः शब्द उत्पत्तिधर्मकस्तद्वद् वर्णात्मकशब्दोऽपि उत्पत्तिधर्मकः। अत एव 'ध्वनिः उत्पत्तिधर्मको वर्णो नित्यः' – इति भवितुं नार्हति। अत एव अनित्यसुखम्, अनित्यदुःखम्, तीव्रसुखम्, मन्दसुखम् इत्यादिज्ञानं भवति, अत एव सुखे दुःखे च तीव्रता मन्दता च वर्तते। एवं तीव्रः शब्दः, मन्दः शब्दः एतादृशज्ञाने अपि शब्दे तीव्रता, मन्दता च वर्तते। अत एव एकस्मिन्नेव शब्दे तीव्रतारूपः, मन्दतारूपो धर्मो न स्थातुमर्हति। अत एव शब्दस्य उत्पत्तिस्वीकारे एतादृशविरुद्धधर्मस्य आशङ्का निवृत्ता भवति। वस्तुतः तीव्रता, मन्दता च शब्दस्य न धर्मः। शब्दस्य यो व्यञ्जकः तस्य एव तीव्रता, मन्दता च वर्तते। शब्दस्य ज्ञानमेव तीव्रं मन्दं च भवति। अत एव भाष्यकारेणोक्तम् –

> संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति, न तु शब्दो भिद्यते, यथा शब्दस्य तीव्रमन्दतया रूपग्रहणस्य इति, तच्च नैवमभिभवोपपत्तेः।[३३]

यथा आलोकः रूपस्य व्यञ्जको भवति। रूपं द्रव्ये पूर्वतः एव अवस्थितो वर्तते, किन्तु आलोकस्य अभावात् तन्न दृष्टिगोचरो भवति। आलोकः रूपस्य अभिव्यञ्जको भवति। अर्थात् प्रत्यक्षकारणत्वात् स रूपाभिव्यञ्जको भवति। अत एव तस्मिन् रूपे तीव्रता, मन्दता च नास्ति। आलोकस्य तीव्रत्वादेव रूपं तीव्रं भवति, आलोकस्य मन्दत्वाद् रूपं मन्दम् अनुभूयते। अर्थात् तीव्रं रूपम्, मन्दं रूपम् इति अनुभूयते। वस्तुतः रूपे तीव्रता मन्दता च नास्ति। एवं भेरी-दण्ड-संयोग एव भेरीशब्दस्य व्यञ्जकः। संयोगस्य तीव्रतावशात् भेरीशब्दस्य श्रवणं तीव्रं भवति। तेन 'भेरीशब्दः तीव्रः' इति अनुभूयते। वस्तुतः भेरीशब्दे तीव्रताधर्मो नास्ति। अस्य पूर्वपक्षस्य निरासो भाष्यकारेण कृतः। तेन उक्तम् 'तच्च न', तन्न वक्तुं शक्यते। कथं न वक्तुं शक्यते? भाष्यकारेण उत्तरं प्रदत्तम् - 'एवम् अभिभवोपपत्तेः'। शब्दोत्पत्तिवादे अभिभवोपपत्तिवादः अस्ति। तात्पर्यम् एवं भवति - भेरीशब्दः तीव्रो भवति, वीणाशब्दः तदपेक्षया मन्दो भवति। भेरीशब्दो वीणाशब्दमभिभवति। भेरीवादने वीणावादने च वीणाशब्दः श्रवणयोग्या न भवति। भेरीशब्दस्य तीव्राभावे

वीणाशब्दः तीव्रो भवति। कोऽपि पदार्थः स्वयं स्वस्य अभिभावको न भवति। विजातीयपदार्थोऽपि न अभिभवति। अत एव भेरीशब्दस्य ज्ञानं तस्य विजातीयवीणाशब्दं न अभिभवति। भेरीशब्दः एव वीणाशब्दस्य अभिभावको भवति। अत एव तीव्रशब्दो मन्दशब्द इत्यत्र कारणं भवति शब्दस्य भेदज्ञानम्। महर्षिः उपचारशब्देन तस्य कारणभूतं शब्दभेदज्ञानमेव तत्र उपलक्षणं प्रतिपादयति। पूर्वपक्षवादिनः शब्दस्य भेदं न स्वीकुर्वन्ति। किन्तु उदयनाचार्य्यः गङ्गेशोपाध्यायादिनैयायिकाः शब्दस्य भेदमेव स्वीकुर्वन्ति। शब्दस्य उत्पत्तिस्वीकारे तीव्रमन्दादिशब्दस्य उत्पत्तिर्भवति, तेन तीव्रशब्देन मन्दशब्दस्य अभिभवो भवति। अत एव भाष्यमते शब्दस्य उत्पत्तिर्भवति, नित्यशब्दस्य अभिव्यक्तिर्न भवति।

व्यञ्जकदेशस्थस्य शब्दस्य अभिव्यक्तिपक्षे भेरीशब्दवीणाशब्दयोः प्राप्तेरसम्भवाद् भेरीशब्देन वीणाशब्दस्य अभिभवो न उपपद्यते। पूर्वसूत्रेण शब्दानित्यत्वे यद् हेतुत्रयमुक्तं तत्प्रत्याचष्टे- 'न घटाभावसामान्यनित्यत्वाद् नित्येष्वप्यनित्यवदुपचाराच्च।'[३४] आदिमत्त्वादिहेतूनां शब्दानित्यत्वसाधकत्वं न सम्भवति व्यभिचारित्वात्। सामान्ये घटत्वादौ अनित्यत्वं नास्ति, ऐन्द्रियकत्वम् अर्थात् इन्द्रियग्राह्यत्वं च अस्ति इति तस्य व्यभिचारित्वं सिद्धम्। येन इन्द्रियेण व्यक्तिर्गृह्यते तेनैव इन्द्रियेण तन्निष्ठजातेर्ग्रहणस्वीकारात् ऐन्द्रियकत्वं सामान्ये सिद्धम्। आकाशादौ अनित्यत्वं नास्ति अनित्यवदुपचारस्तु भवति। अनित्यवदुपचारस्यापि व्यभिचारित्वं सिद्धम्। व्यभिचारिणश्च हेतोः साध्यसाधकत्वं न सम्भवति। 'न घटाभावसामान्यनित्यत्वाद् नित्येष्वप्यनित्यवदुपचाराच्च।' इति पूर्वपक्षसूत्रमिदम्। पूर्वसूत्रोक्तं हेतुत्रयं शब्दानित्यत्वस्य साधकं न भवितुर्महति, यतो घटाभावस्य अर्थात् घटध्वंसस्य सामान्यस्य अर्थाद् घटत्वादिर्जातेर्नित्यत्म् अस्ति। तथा नित्यपदार्थस्यापि अनित्यपदार्थवद् व्यवहारो भवति। अत एव भाष्यकारेण उक्तम् - 'यथाहि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेशः, एवमाकाशस्य प्रदेशः, आत्मनः प्रदेश इति भवति।'[३५]

आत्मा आकाशश्च नित्यपदार्थः। किन्तु आकाशस्य प्रदेशः, आत्मनः प्रदेशः एतादृशो व्यवहारो भवति। अर्थाद् आत्मनि आकाशे च वृक्षकम्बलरूपानित्यद्रव्यवत् प्रदेशव्यवहारो भवति। अत एव नित्यपदार्थोऽपि अनित्यो भवति। तेन उत्पत्तिधर्मकः सन्नपि घटादीनां ध्वंसः यथा अनित्यो न भवति, ऐन्द्रिकः सन्नपि घटत्व-पटत्वादिजातिर्यथा अनित्यो न भवति, अनित्यपदार्थवद् ज्ञायमानः(व्यवह्रियमाणः) सन्नपि आत्मा आकाशश्च अनित्यं न भवति तथैव पूर्वसूत्रोक्तं उत्पत्तिधर्मकत्वादिहेतुत्रयम् अनित्यत्वस्य साधको न भवति, यतः हेतुत्रयमेव अनित्यत्वस्य व्यभिचारि इति पूर्वपक्षस्य आशयः।

पूर्वसूत्रे पूर्वपक्षिणा आदिमत्त्वादिहेतुना यद् व्यभिचारित्वं प्रदर्शितं तदधुना निराकरोति 'तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः'[३६] इति सूत्रेण। वास्तविकनित्यत्वस्य औपचारिकनित्यत्वस्य च नानात्वविभागात् प्रध्वंसे भाक्तमेव नित्यत्वं न तु तात्त्विकमिति आदिमत्त्वहेतोरव्यभिचारः। अत्र नित्यत्वस्य किं स्वरूपम्? मुख्यनित्यत्वमेव नित्यपदार्थस्य तत्त्वम्। गौणनित्यत्वं नित्यपदार्थस्य तत्त्वं न भवितुमर्हति। तदेव भाक्तनित्यत्वम्। मुख्यनित्यत्वभाक्तनित्यत्वयोर्भेदात् पूर्वोक्तव्यभिचारो नास्ति। यस्य पदार्थस्य उत्पत्तिर्नास्ति स अनुत्पत्तिधर्मकः। उत्पत्तिशून्यपदार्थस्य विनाशशून्यत्वमेव, नित्यपदार्थस्य तत्त्वम्। तदेव मुख्यनित्यत्वम्। घटध्वंसे मुख्यनित्यत्वं नास्ति। ध्वंसपदार्थस्य एव उत्पत्तिर्भवति। स अनुत्पत्तिधर्मकपदार्थो न भवति। ध्वंसे अविनाशित्वरूपभाक्तनित्यत्वस्य विद्यमानत्वात् 'ध्वंसो नित्यः' एतादृशज्ञानं भवत्येव। वस्तुतः ध्वंसो न नित्यपदार्थो गगनादिनित्यपदार्थसदृशत्वात् ध्वंसो नित्य इत्यभिधीयते। स एव भाक्तनित्यः। भक्तिशब्दस्यार्थः सादृश्यम्। उद्द्योतकारेण उक्तम् – प्रागभावस्य उत्पत्तिर्न भवति, ध्वंसस्य विनाशो न भवति। अत एव प्रागभावस्य ध्वंसस्य च गगनादिनित्यपदार्थसदृशत्वाद् उभयो

नित्यः। वस्तुतः प्रागभावः न नित्यः, ध्वंसोऽपि न नित्यः। मुख्यनित्यत्वस्य भाक्तनित्यत्वस्य च भिन्नता सूत्रकारेण उक्ता। यच्च ऐन्द्रियकत्वहेतोः सामान्ये अनित्यत्वव्यभिचारित्वम् उक्तम् अग्रिमसूत्रेण 'सन्तानानुमानविशेषणात्।'[३७] सन्तानस्य अनुमाने अर्थाद् अनुमितिकरणे लिङ्गे विशेषणात् । शब्दस्य अनित्यत्वानुमानात् शब्दस्य सन्तानानुमाने वैशिष्ट्यमस्ति। वृत्तिकारविश्वनाथमते अनुमाने ऐन्द्रियकत्वरूपहेतौ सन्तानस्य (=जातेः) विशेषणत्वाद् न व्यभिचारः। फणिभूषणतर्कवागीशमहोदयेन सूत्रस्यास्य आलोचनायां शब्दचिन्तामण्युपरि पक्षधरमिश्रकृताया आलोकटीकाया पङ्क्तिः उद्धृता – 'शब्दोऽनित्यः सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणबहिरिन्द्रियग्राह्यत्वात्।'[३८]

पुनः भाष्यकारेण उक्तम् – 'अथापि खल्विदमस्ति, इदं नास्ति इति कुत एतत् प्रतिपत्तव्यमिति, प्रमाणत उपलब्धेरनुपलब्धेश्चेति, अविद्यमानस्तर्हि शब्दः।'[३९] 'प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च'[४०] इति सूत्रेण शब्दस्य अनित्यत्वं प्रतिपादयति। उच्चारणात् प्राक् शब्दस्य विद्यमानता नास्ति। शब्दो यदि नित्यो भवति तर्हि उच्चारणात् प्रागपि तस्य श्रवणं स्यात्। अत एव शब्दः अनित्यः। शब्दस्य नित्यत्वप्रतिपादने पुनः सूत्रं कृतम्- 'अस्पर्शत्वात्'।[४१] 'शब्दो नित्यः अस्पर्शत्वात्।' इत्यनुमानेन शब्दस्य नित्यत्वं प्रतिपादयति। शब्दे स्पर्शो नास्ति। आकाशेऽपि स्पर्शो नास्ति। यत्र स्पर्शत्वं नास्ति सः नित्यः, यथा आकाशः। तथैव शब्दोऽपि नित्यः। स्पर्शशून्यत्वं नित्यत्वस्य व्याप्यो भवति इति पूर्वपक्षस्याशयः। तत्र पुनः सूत्रकारेण सूत्रद्वयम् उक्तम्- 'न कर्मानित्यत्वात्',[४२] 'नाणुनित्यत्वात्'।[४३] उदाहरणद्वये सव्यभिचारहेत्वाभासो वर्तते। स्पर्शवान् भूत्वा अपि परमाणुः नित्यः। स्पर्शाभावविशिष्टं कर्म अनित्यं भवति। अत एव अस्पर्शत्वाद् इति हेतोः साध्यसाधर्म्यप्रयुक्तम् उदाहरणं नास्ति। यतः कर्म अनित्यं भवति। भाष्यकारेण पुनः पुनः उक्तम्- 'अयं तर्हि हेतुः'। को हेतुः? 'सम्प्रदानात्'।[४४] यदि सव्यभिचाराद् अस्पर्शत्वं न हेतुः, तर्हि अयम् सम्प्रदानादिति शब्दनित्यत्वस्य हेतुः अर्थात् साधको भवतु। नित्यः शब्दः सम्प्रदानात् प्रदानकर्मत्वात्। सम्प्रदीयमानं धनादिकम् अवस्थितम्। शब्दस्य सम्प्रदीयमानत्वेनाऽक्षणिकत्वे प्राप्ते उच्चारणान्तरमपि स्थितौ तदनन्तरं विनाशकारणासम्भवाद् शब्दस्य नित्यत्वं भवति। आचार्यः यस्मै शिष्याय विद्यां ददाति, तत्र वस्तुतः शब्दस्यैव सम्प्रदानम् अस्ति। शब्दे सम्प्रदीयमानत्वहेतोर्विद्यमानत्वात् सम्प्रदानात् प्रागपि उच्चारणात् प्रागपि शब्दस्य विद्यामानता अस्ति इति सिद्धं भवति। एतेन शब्दस्य नित्यत्वमेव सिद्धं भवति। अत्र एकं सूत्रम् उक्तम् - 'तदन्तरालानुपलब्धेरहेतुः'।[४५] अन्यत्र सम्प्रदानस्थले दातुः ग्रहीतुश्च मध्ये देयविषयस्य प्रत्यक्षं भवति। किन्तु शब्दसम्प्रदानात् प्राक् शब्दस्य उपलब्धिर्न भवति। अत एव अत्र अहेतुः अर्थात् हेत्वाभासः अस्ति। अपरं न्यायसूत्रं तावत् - 'अध्यापनादप्रतिषेधः'।[४६] अध्यापनाकाले शब्दे सम्प्रदीयमानत्वहेतोः प्रतिषेधो नास्ति, अर्थात् शब्दे सम्प्रदीयमानत्वं वर्तते। भाष्यकारेण उक्तम्- 'अध्यापनं लिङ्गम्, असति सम्प्रदाने अध्यापनं न स्यात्'।[४७] अत एव अध्यापनं शब्दसम्प्रदानस्य लिङ्गम्। शब्दे सम्प्रदीयमानत्वमस्ति इत्येकः पक्षः, नास्तीति द्वितीयपक्षः एतयोरुभयोरपि पक्षयोर्मध्ये कस्यापि एकस्य पक्षस्य अध्यापनात् प्रतिषेधो नोपपद्यते, उभयोः पक्षयोः समानत्वात्। एवम् उक्तरीत्या उभयोरपि पक्षयोः अध्यापनस्य समानत्वाद् अध्यापनं शब्दसम्प्रदानस्य साधकं न सम्भवति।

एवं रूपेण न्यायसूत्रैः भाष्यव्याख्यानेन च शब्दस्य अनित्यत्वं प्रतिपादितम्। शब्दः अनित्यः कृतकत्वात्। घटवद् इत्यनुमानेन शब्दस्य अनित्यत्वम् अनुमीयते - यद् यत् कृतकम् तत् तदनित्यम्। यथा घटादिकम्।

**संकेतपञ्जिः**

अक्ष. द. = *अक्षपाददर्शनम्*

का. = कारिका

त. सं. = *तर्कसंग्रहः*

न्या. भा. = *न्यायभाष्यम्*

न्या. म. = *न्यायमञ्जरी*

न्या. वा. ता. = *न्यायवार्त्तिकतात्पर्यटीका*

न्या. द. = *न्यायदर्शनम्*

न्या. सू. = *न्यायसूत्रम्*

पद. = *पदकृत्यम्*

पर. म. = *परमलघुमञ्जूषा*

पा. सू. = *पाणिनीयसूत्रम्*

पृ. = पृष्ठाङ्कः

प्र = *प्रदीपः*

प्रक. = *प्रकरणपञ्चिका*

भा. प. = *भाषापरिच्छेदः*

महा. पस्प. = *महाभाष्यम्, पस्पशाह्निकम्*

श्लो. वा. = *श्लोकवार्त्तिकम्*

सम्पा. = सम्पादकः

सर्व. सं. = *सर्वदर्शनसंग्रहः*

सा. का. = *सांख्यकारिका*

**उल्लेखपञ्जिः**

१. न्या. सू. १/१/१)

२. न्या. भा., न्या. सू., पृ.-२९।

३. न्या. वा. ता., न्या. द., पृ.-३८।

४. न्या. भा., न्या. सू., पृ.-६०।

५. सा. का. – ४।

६. सर्व. सं., अक्ष. द., पृ.-३८९।

७. न्या. सू. १/१/३।

८. *तदेव*, १/१/७।

९. न्या. भा., न्या. सू., पृ.-१८९।

१०. न्या. सू. १/१/८।

११. न्या. भा., न्या. सू., पृ.-१९१।

१२. *तत्रैव*।

१३. त. सं., पृ.-१४२।

१४. भा. प., कारिका-८१।

१५. पर. म., पृ.-१३।

१६. त. सं., पृ.-१२९।

१७. भा. प., का. १६४।

१८. महा. पस्प., पृ.-१३८।

१९. पद., त. सं., पृ.-२१।

२०. *तदेव*, पृ.-२१।

२१. महा. पस्प., पृ.-१५८।

२२. *तदेव*, प्र., पृ.-४६।

२३. महा. पस्प., पृ.-१०।

२४. न्या. म., पृ.-३५५।

२५. पा. सू. १/१/७०।

२६. महा. पस्प., पृ.- ३७८।

२७. श्लो. वा., शब्दनित्यताधिकरणम्, श्लोकः-७।

२८. न्या. सू. २/२/१३।

२९. *तदेव* १/१/७।

३०. प्रक., नवमप्रकरणम्।

३१. न्या. भा., न्या. सू., पृ.-३९४।

३२. भा. प., का.-१६५-१६६।

३३. न्या. भा., न्या. सू., पृ.-३९९।

३४. न्या. सू. २/२/१४।

३५. न्या. भा., न्या. सू., पृ.-४०४।

३६. न्या. सू. २/२/१५।

३७. तदेव २/२/१६।

३८. न्या. द., पृ.-४१०।

३९. न्या. भा., न्या. सू., पृ.-४१७।

४०. न्या. सू. २/२/१८।

४१. *तदेव* २/२/२२।

४२. *तदेव* २/२/२३।

४३. *तदेव* २/२/२४।

४४. *तदेव* २/२/२५।

४५. *तदेव* २/२/२६।

४६. *तदेव* २/२/२७।

४७. न्या. भा., *तदेव*, पृ.-४१७।

**परिशीलितग्रन्थपञ्जिः**


अन्नंभट्टः। *तर्कसंग्रहः*। सम्पा. श्रीकृष्णवल्लभाचार्यः। *न्यायबोधिनी-पदकृत्य-दीपिका-किरणावली*व्याख्योपेतः। वाराणसी: चौखम्बा संस्कृत सीरीज आफिस, २०१७।

ईश्वरकृष्णः। *सांख्यकारिका*। सम्पा. विरूपाक्षनन्दः। माद्रास: श्रीरामकृष्णमठः, १९९५ (प्रथमसंस्करणम्)।

गौतमः। *न्यायदर्शनम्*। सम्पा. अमरेन्द्रमोहन-तर्कतीर्थः, तारानाथ-न्यायतर्कतीर्थः। *भाष्य-वार्त्तिक-तात्पर्यटीका-वृत्ति*सहितम्। नइ दिल्ली: मुन्सीराम मनोहरलाल पावलिशार्स् प्राइभेट् लिमिटेड्, १९८५ (द्वितीयसंस्करणम्)।

-------। -------- (प्रथमखण्डः) । सम्पा. फणिभूषणतर्कवागीशः। कलकाता: पश्चिमवङ्ग राज्य पुस्तक पर्षत्, २०१८ (षष्ठसंस्करणम्)।

------। ------ (द्वितीयखण्डः) । सम्पा. फणिभूषणतर्कवागीशः। कलकाता: पश्चिमवङ्ग राज्य पुस्तक पर्षत्, २०१५ (तृतीयमुद्रणम्, १९८४ प्रथमसंस्करणम्)।

नागेशभट्टः। *परमलघुमञ्जूषा*। सम्पा. अलखदेवशर्मा। सटिप्पण-*तत्त्वप्रकाशिका*-संस्कृत-हिन्दीव्याख्योपेता। वाराणसी: चौखम्बा संस्कृत सीरीज आफिस, १९७४। (हरिदास संस्कृत ग्रन्थमाला ४३)।

पतञ्जलिः। *महाभाष्यम् (पस्पशाह्निकम्)*। सम्पा. दण्डिस्वामी दामोदर-आश्रमः। कलकाता: दक्षिणेश्वर रामकृष्णसंघ आद्यापीठ, १४१७(वङ्गाव्दः)।

पाणिनिः। *अष्टाध्यायी*। सम्पा. गोपालदत्तपाण्डेयः। वाराणसी: चौखम्बा सुरभारती प्रकाशन, २०१७। (चौखम्बा सुरभारती ग्रन्थमाला १९)।

*भारतीय दर्शन कोष*(१)। सम्पा. भट्टाचार्य एवं भट्टाचार्य। कलकाता: संस्कृत कलेज, १३८३ (वङ्गाव्दः)।

महापात्रः, विष्णुपदः। *न्यायपारिभाषिकशब्दावली*। संस्कृताङ्गलसमन्विता। नई दिल्ली: मान्यता प्रकाशन, २०१० (प्रथमसंस्करणम्)।

वात्स्यायनः। *न्यायभाष्यम्*। सम्पा. द्वारिकादासशास्त्री। सुदर्शनाचार्यकृत-*प्रसन्नपदाव्याख्यया* संबलितम्। वाराणसी: बौद्धभारती: १९९८।

विश्वनाथः। *भाषापरिच्छेदः*। सम्पा. पञ्चाननभट्टाचार्यः। कलकाताः संस्कृत पुस्तक भाण्डार, १३७७ (वङ्गाव्दः)।

--------।-------। सम्पा. आशुतोषभट्टाचार्यः। कलकाताः विजयायन, २००० (प्रथमसंस्करणम्)।

--------।-------। सम्पा. नारायणचरणशास्त्री, श्वेतवैकुण्ठशास्त्री। वाराणसी: चौखम्बा संस्कृत संस्था, २०११।

विश्वनाथपञ्चाननः। *न्यायसिद्धान्तमुक्तावली*, महादेवभट्टारब्धेन श्रीदिनकरभट्टप्रपूरितेन *दिनकरी* (प्रकाश) व्याख्यानेन श्रीरामरुद्रभट्टाचार्यारब्धेन पण्डितराजश्रीराजेश्वरशास्त्रिप्रपूरितेन *रामरुद्री* (तरङ्गिणी) व्याख्यानेन च विभूषिता। सम्पा. राजेश्वरशास्त्री। वाराणसी: चौखम्भा प्रकाशन, २०११।

शालिकनाथमिश्रः। *प्रकरणपञ्चिका*। सम्पा. मुकुन्दशास्त्री। काशी: विद्याविलासः, १९०४।

शिवादित्यमिश्रः। *सप्तपदार्थी*। सम्पा. तपनशङ्करभट्टाचार्य्यः। कलकाता: संस्कृत वुक डिपो, २०१२ (प्रथमप्रकाशः)।

Jhalakīkar, Bhīmācārya. *Nyāyakoṣa*. Revised & Re ed. Vāsudev Shāstri Abhyankar. Varanasi: Chaukhamba Surbharati Prakashan, 2017. (The Chaukhamba Surbharati Granthamala 523).

Mādhavācārya. *Sarvadarśanasaṃgraha*. Ed. Uma Shankar Sharma. With hindi comm. Prakash. Varanasi: Chowkhamba Vidyabhawan, 2008 (rpt. edition). (The Vidyabhawan Sanskrit Granthamala 113).

# संस्कृतकाव्यशास्त्रे गुणीभूतव्यङ्ग्यकाव्यपर्यालोचनम्

शिउली-वासुः

**सारसंक्षेपः**

संस्कृतकाव्यशास्त्रे गुणीभूतव्यङ्ग्यकाव्यस्य पर्यालोचनमेव अस्य प्रबन्धस्य विषयः। आनन्दवर्धनात् प्राक् काव्यभेदचर्चायां गुणीभूतव्यङ्ग्यकाव्यस्य अस्तित्वं न परिलक्ष्यते। यतः व्यङ्ग्यकाव्यं व्यञ्जनाव्यापारः इत्यादयः विषयानवलम्ब्य व्याख्यानं ध्वन्यालोके लोचने च प्राप्तम्। तस्मात् गुणीभूतव्यङ्ग्यस्य व्याख्या तत् कालादेव लभते। अस्मिन् प्रबन्धे ध्वन्यालोक-काव्यप्रकाश-चन्द्रालोक-साहित्यदर्पणः रसगङ्गाधर इति ग्रन्थसमूहान् विचारपूर्वकं पर्यालोच्यते, अभिनवगुप्तविरचितं लोचनमपि अत्र पुनः पुनः प्रसङ्गक्रमेण प्रयोजनानुसारेण पर्यालोचितम्। सर्वोपरि गुणीभूतव्यङ्ग्यकाव्ये गुणीभूतं भूत्वाऽपि व्यङ्ग्यस्य माधूर्यमस्ति इति प्रतिपादयितव्या अनेन प्रबन्धेन।

**कुञ्चिकाशब्दः**

गुणीभूतव्यङ्ग्यकाव्यस्य, काव्यभेदचर्चायां, व्यञ्जनाव्यापारः, ध्वन्यालोकः, चन्द्रालोकः।

संस्कृतकाव्यशास्त्रेषु *ध्वन्यालोके* एव सर्वप्रथमं व्यञ्जना-व्यङ्गार्थ-इत्यादीन् विषयानवलम्ब्य सुविशदः पर्यालोचनं प्राप्यते। नवमशताब्द्याम् आचार्येण आनन्दवर्धनेन *ध्वन्यालोक* विरच्यते। ग्रन्थस्योपरि आचार्येण अभिनवगुप्तेन *लोचन*नामाङ्किता टीका विरचिता। आचार्यद्वयेन ग्रन्थेषु टीकासु च ध्वनितत्त्वमवलम्ब्य प्रभूतं व्याख्यानं प्रदत्तम्। आनन्दवर्धनात् परं काव्यशास्त्रे ध्वनिवादिनः आचार्याः व्यङ्ग्यार्थमवलम्ब्य काव्यभेदमालोचितवन्तः। तेषु काव्यभेदेषु गुणीभूतव्यङ्ग्यकाव्यमन्यतमम्, ततः प्रागेव व्यङ्ग्यकाव्यस्य तथा ध्वनिकाव्यस्य लक्षणं क्रियते, यथा –

> यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
> व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥[१]

अर्थात् यत्रार्थो वाच्यविशेषः वाचकविशेषः शब्दो वा आत्मानमप्रधानीभूतं कृत्वा अपरार्थं व्यङ्क्तः, तत्र काव्यविशेषो ध्वनिकाव्यरूपेण परिगण्यते। परवर्तिनि काले आनन्दवर्धनस्य अनुगामिनः आलङ्कारिकाः इदं काव्यं स्वीकुर्वन्ति, यथा *काव्यप्रकाशे* आचार्येण मम्मटेनोक्तं यथा – *इदमुत्तममतिशयिनि व्यङ्गे वाच्याद् ध्वनिर्बुधैर्कथितः*[२] इति।

अर्थात् व्यङ्गार्थप्रधानं काव्यं मम्मटेन ध्वनिकाव्यमुत्तमकाव्यं वा कथितम्, आचार्येण जगन्नाथेन तमेव उत्तमोत्तमकाव्यमिति निगदितम्, उक्तं यथा *रसगङ्गाधरे* – *शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम् उत्तमोत्तमम् वा*[३] इति।

गुणीभूतव्यङ्ग्य इत्यस्य उच्चारणेनैव वक्तुं शक्यते अस्य काव्यस्य व्यङ्गार्थः अप्रधानीभूतः भवति। आचार्येण आनन्दवर्धनेन अस्य काव्यस्य प्रत्यक्षरूपेण लक्षणं न प्रदत्तम्, *लोचन*टीकायामभिनवगुप्तेनोक्तं यथा –

> प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थितम्।
> द्विधा काव्यं ततोऽन्यद् यच्चित्रमभिधीयते॥[४]

अर्थात् व्यङ्ग्यस्य प्राधान्याप्राधान्यभेदेन काव्यं द्विविधमेव, ततोऽन्यत् चित्रकाव्यमिति कथ्यते । यद्यपि आनन्दवर्धनेन गुणीभूतव्यङ्ग्यकाव्यस्य लक्षणं न दत्तं तथापि विविधान् विषयानालोचनाकाले आनन्दवर्धनेन गुणीभूतव्यङ्गस्य प्रसङ्गः उत्थापितः ; यथा *ध्वन्यालोक*स्य प्रथमोद्यते अलंकारान् पर्यालोच्य आनन्दवर्धनः प्रदर्शयति यद् बहुषु अलंकारेषु व्यङ्ग्यार्थः प्रतीयमानार्थः वैशद्येन प्रतीतिः न भवति, अपि बहुषु अलङ्कारेषु व्यङ्ग्यार्थःवैशद्येन प्रतीतिः भवति । *ध्वन्यालोका*नुसारेण अलङ्कारेषु व्यङ्गार्थः वैशद्येन प्रतीति भवतु न वा भवतु इति उभयत्र गुणीभूतव्यङ्ग्यकाव्यस्य विषयीभूताः भवति । आनन्दवर्धनेन व्यतिरेकमुखेनोक्तं यथा –

> व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
> समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥
>
> व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
> न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥[५]

आनन्दवर्धनस्य वक्तव्यमभिनवगुप्ताचार्यः दृढयति, अस्मिन् विषये तस्य स्पष्टोक्तिः यथा - *तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशातिययोगिनो रूपकादयोऽलंकाराः सर्वे एव गुणीभूतव्यङ्ग्यस्य मार्गः*[६] इति ।

अतःपरं *ध्वन्यालोक*स्य तृतीये उद्योते गुणीभूतव्यङ्ग्यकाव्यस्वरूपं सविस्तारमालोचितम्, तत्रोक्तम् –

> प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
> यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ॥[७]

अर्थात् गुणीभूतव्यङ्ग्यकाव्ये यद् वाच्यचारुत्वं भवति, तद् व्यङ्ग्यान्वये एव सम्भवति, अस्मिन् काव्ये वाच्यप्राधान्यत्वं स्वयमेव न भवति, व्यङ्ग्यस्य साहचर्येण वाच्यस्य सौन्दर्यं सहृदयैः उपलभ्यते । उदाहरणञ्च दीयते –

> लावण्यसिन्धुरपरैव हि केयमत्र
> यत्रोत्पलाति शशिना सह सम्प्लवन्ते ।
>
> उन्मज्जति द्विरदकुम्भतटो च तत्र
> यत्रापरे कदलिकाण्डमृणालदण्डाः ॥[८]

अत्र कस्याश्चित् तरुण्याः अपूर्वं रूपलावण्यं ध्वन्यते, अत्र वस्तुध्वनिः मुख्यरूपेण न प्रतीयते, यतः अभिधया श्लोकार्थः न स्पष्टीभवति, तस्मात् अत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः कदाचिद्वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता भवति । अभिलाषविषयगर्भेयं कस्यचित्तरुणस्योक्तिः, अत्र सिन्धुशब्देन परिपूर्णता, उत्पलशब्देन कटाक्षच्छटाः, शशिशब्देन वदनं, द्विरदकुम्भतटो-शब्देन स्तनयुगलं, कदलिकादण्डशब्देन उरुयुगलं, मृणालदण्डशब्देन दोर्युग्ममिति ध्वन्यते । अत्र अभिनवगुप्तस्य *लोचन*व्याख्या उल्लेखनीया – *स च प्रतीयमानोऽप्यविषयः अपरैव हि केयम्' इत्युक्तिगर्भीकृते वाच्यांशे चारुत्वच्छायां विधत्ते, वाच्यस्यैव स्वात्मोन्मज्जनया निमज्जितव्यङ्ग्यजातस्य सुन्दरत्वेनावभानात्, सुन्दरत्वं चास्यासम्भाव्यमानसमागमसकललोकसारभूतकुवलयादिभाववर्गस्यातिसुभगकाधिकरणविश्रान्तिलब्धसमुच्चयरूप तया विस्मयविभावताप्राप्तिपुरस्कारेण व्यङ्ग्यार्थोपस्कृतस्य तथा विचित्रस्यैव*

*वाच्यरूपोन्मज्जनेनाभिलाषादिविभावत्वात् । अतएवेयति यद्यपि वाच्यस्य प्राधान्यं तथापि रसध्वनौ तस्यापि गुणतेति सर्वस्य गुणीभूतव्यङ्ग्यस्य प्रकारे मन्तव्यम्*[९] । अस्य निर्गलितार्थमेव वाच्यस्य सौन्दर्यं व्यङ्ग्यार्थं विना न सम्भवति, अर्थात् ध्वनेरेवात्मत्वम् इति उक्ति गुणीव्यङ्ग्यकाव्येऽपि न निष्फला जाता । अतः अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद्वाच्यप्राधान्येन काव्यचारुत्वापेक्षया गुणीभावे सति गुणीभूतव्यङ्गता भवति । उदाहरणेन स्फुटीक्रियते । यथा –

> अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
> अहो दैवगतिः कीदृक् तथापि न समागमः ॥

अत्र अनुरागः योगरूढः शब्दः, अस्य प्रसिद्धार्थः अभिलाषः, व्युत्पत्तिगतः अर्थः रक्तिमः, अनुरागशब्दो रक्तिमरूपप्रकृतार्थे न प्रयुक्तः, शब्दोऽयं लावण्यशब्दवत् प्रवृत्तिरित्यभिप्रायेणातिरस्कृतवाच्यत्वमुक्तम् । अत्र नायकनायिकावृत्तान्तमेव व्यङ्ग्यम् । *ध्वन्यालोके* उक्तम् – *अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवद् इति तस्यैव प्राधान्य-विवक्षा*[१०] । अधुना प्रश्नः उत्थाप्यते *ध्वन्यालोके* ध्वनिकाव्यस्य औत्कर्षं प्रशंसितम्, *काव्यस्यात्मा ध्वनिः* इति वाक्यस्य सादरमुद्घोषितं ग्रन्थकारेण । पुनः गुणीभूतव्यङ्ग्यकाव्यस्य विश्लेषणं कृतम् । अत्र किमपि तात्पर्यमस्ति न वा । आनन्दवर्धनेन अस्मिन् विषये स्पष्टतया नोक्तं परन्तु लोचने अभिनवगुप्तेन पुनः पुनः गुणीभूतव्यङ्ग्यकाव्येऽपि व्यङ्ग्यस्य सौन्दर्यविषये आलोचितम्, उक्तं यथा – *अधुना तु गुणीभूतोऽप्ययं व्यङ्ग्यः कविवाचः पवित्रयतीत्यमुना द्वारेण तस्यैवात्मत्वं समर्थयितुमाह – प्रकार इति*[११] । अनेन गुणीभूतव्यङ्ग्यकाव्यस्य व्याख्याकारणं समर्थितम् टीकायाम् । प्रथमोद्यते अलङ्काराणां व्याख्याकाले आचार्येण आनन्दवर्धनेन प्रदर्शितम् इमे अलंकाराः गुणीभूतव्यङ्ग्यकाव्यस्य विषयीभूताः, वृत्तौ च उक्तम् – *व्यङ्ग्यप्राधान्ये हि ध्वनिः, न चैतत् समासोक्त्यादिष्वस्ति*[१२] । तथापि इदमवश्यमुल्लेखनीयम् – व्यङ्ग्यमप्रधानं भूत्वाऽपि गुणीभूतव्यङ्ग्यकाव्ये चमत्रकारित्वमेव वर्तते । अभिनवगुप्तः *लोचने* पुनः पुनः उक्तवान् – *तथापि विवेचके जीवितान्वेषणे क्रियमाणे यदा व्यङ्ग्योऽर्थः पुनरपि वाच्यमेवानुप्राणयन्नास्ते तदा तदुपकरणत्वादेव तस्यालंकारता । ततो वाच्यादेव तदुपस्कृताच्चमत्कारलाभ इति यद्यपि पर्यन्ते रसध्वनिरिति, तथापि मध्यकक्षानिविष्टोऽसौ न रसोन्मुखी भवति, स्वातन्त्रेणापि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्यतोक्ताः*[१३] । तृतीयोद्यते आनन्दवर्धनेन अस्मिन् विषये पुनरुक्तम् –

> वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।
> प्रायेणैव परां छायां विभ्रल्लक्ष्ये निरीक्षते ॥[१४]

अर्थात् वाच्यालंकारवर्गो व्यंङ्ग्यांशस्य अनुगमे सति अतिशयं छायां धारयति । अस्मिन् प्रसङ्गे *ध्वन्यालोके* अतिशयोक्तेः प्रसङ्गः उत्थापितः, उक्तञ्च – *दीपक-समासोक्तिवदन्योऽलंकाराः प्रायेण व्यङ्ग्यालंकारान्तरसंस्पर्शिनो दृश्यन्ते । यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालंकारेषु शक्यक्रिया*[१५] । *ध्वन्यालोका*नुसारेण कविकर्मणि अतिशयोक्त्यलंकारस्य कार्यकारिता उल्लेखनीया । प्रायः सर्वेषु अलंकारेषु अतिशयोक्तिः गुणीभूतरूपेण स्थित्वा सौन्दर्यं सृजति, अतः अभिनवगुप्ताचार्यः अतिशयोक्त्या सह गुणीभूतव्यङ्ग्यस्य सम्बन्धं स्थापयित्वा उक्तवान् लोचने – *न चातिशयोक्ति-वक्रोक्त्युपमादीनां सामान्यरूपत्वं चारुत्वहीनामुपपद्यते । चारुता चेतदायत्तेत्येतदेव गुणीभूतव्यङ्ग्यत्वं सामान्यलक्षणम्*[१६] । अपि च काव्यशास्त्रे उल्लिखितानलंकारान् पर्यालोच्य इदं कथ्यते यद् तत्र व्यङ्ग्यत्वं केनाप्युपायेन वर्तते । यथा रूपक-उपमा-

तुल्ययोगिता-निदर्शनादिषु-तेषु गम्यमानमुखेनैव यत् सादृश्यं तदेव शोभातिशयशालि भवतीति, ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तः गुणीभूतव्यङ्ग्यस्यैव विषयाः, समासोक्त्याक्षेप पर्यायोक्त्यादिषु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानाद् गुणीभूतव्यङ्ग्यता निर्विवादैव[१७]।

संस्कृतकाव्यसमूहेषु प्रायः गुणीभूतव्यङ्ग्यकाव्यमेव दृश्यते । उक्तं – ये चैतेऽपरिमितस्वरूपा अपि प्रकाशमानास्तथाविधार्थरमणीयाः सन्तो विवेकिनां सुखावहाः काव्यवन्धास्तेषु सर्वेष्वेवायं प्रकारो गुणीभूतव्यङ्ग्यो नाम योजनीयः। यथा –

> लक्ष्मीर्दुहिता जामाता हरिस्तस्य गृहिणी गङ्गा।
> अमृतमृगाङ्की च सुतावहो कुटुम्बं महोदधे ॥

अत्र वाच्यालंकाराणां प्राचुर्यं नास्ति, परन्तु अत्र पदसमूहाः प्रसन्नगम्भीरयुक्ताः, सुखावहाश्च, अत्र कतिपयपदानां व्यङ्ग्यार्थः लोचनानुसारेण वक्तुं शक्यते, यथा – लक्ष्मी सकलजनाभिलाषभूमिर्दुहिता, जामाता हरिः य समस्तभोगापवर्गदानसततोद्यमी, तथा गृहिणी गङ्गा यस्याः समभिलषणीये सर्वस्मिन् वस्तुन्यपहत उपायभावः इत्यादयः, एतादृशाः काव्यबन्धाः केवलं प्रसन्नगम्भीरपदप्रयोगेन व्यङ्ग्यार्थाक्षेपकत्वात् सुखप्रदाः, अपि च अलंकाररसादीन् विनाऽपि वाहुल्यवर्जितं इमे काव्यबन्धाः गुणीभूतकाव्यरूपेण यैः अङ्गीकृताः ते सुमेधसः इति मन्यते आनन्दवर्धनेन, उक्तञ्च –

> प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।
> ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा ॥[१८]

*ध्वन्यालोक*स्य पश्चात् परवर्तिनि काले आनन्दवर्धनस्य अनुगामिनः आलंकारिकाः व्यङ्ग्यार्थमवलम्ब्य काव्यभेदं कर्त्तुं व्यङ्ग्यार्थप्रधानं काव्यमुत्तमोत्तमं काव्यमिति कथयति, पूर्वमेव प्रबन्धेऽस्मिन् उल्लिखितमिदम्, आनन्दवर्धनस्य परमेव आचार्यमम्मटः गुणीभूतव्यङ्ग्यकाव्यं मध्यमकाव्यं कथयति, आनन्दवर्धनेन गुणीभूतव्यङ्ग्यस्य काव्यम् अत्यन्तं समादृतम्। इदमेव मनसि निधाय मम्मटेन *काव्यप्रकाशे* गुणीभूतव्यङ्ग्यकाव्यभेदाः पृथगध्याये आलोचिताः। *काव्यप्रकाशे* प्रदत्तं लक्षणं यथा – *अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्*[१९] इति। *अतादृशि* इत्यस्य पदस्य अर्थः क्रियते – *अतादृशि वाच्यादनतिशयिनि*[२०]।

पूर्वाचार्याभ्याम् (आनन्दवर्धनः, अभिनवगुप्तः) युक्तिसहकारेण गुणीभूतव्यङ्ग्यकाव्येऽपि व्यङ्ग्यस्य औत्कर्षं प्रतिपादितम्। मम्मटेन विचारविश्लेषणं विनाऽपि गुणीभूतव्यङ्ग्यकाव्ये वाच्यस्य औत्कर्षं अथवा वाच्य-व्यङ्ग्ययोः समप्राधान्यं स्वीकृतम्, व्यङ्ग्यस्य सौन्दर्यविषये किमपि नोक्तम्, अपि च यान्त्रिकतया गुणीभूतव्यङ्ग्यकाव्यस्य अष्टभेदान् आलोचितवान् पञ्चमोल्लासे। तद्यथा – अगूढम् वा असहृदयैरपि झटिति संवेद्यम्. अपरस्याङ्गम् वा वाक्यार्थीभूतस्य वाक्यतात्पर्यविषयतया प्रधानस्येति अङ्गमुपकारकम्, वाच्यासिद्ध्यङ्गं वा वाच्यस्य वाच्यार्थस्य सिद्धिः विश्रान्तिस्तत्र अङ्गं निदानम्, वाच्यस्य सिद्धिरेव यदधीना, अस्फुटम् सहृदयानामपि झटित्यसंवेद्यमिति, संदिग्धप्राधान्यं वाच्यकृतं व्यङ्ग्यकृतं वा प्राधान्यं इत्यनिश्चितम्, तुल्यप्राधान्यं वाचव्यङ्ग्ययोः समानं प्राधान्यम्। काक्वाक्षिप्तं काकुर्ध्वनेर्विकारः तया आक्षिप्तं झटिति प्रकाशितम्, असुन्दरम् चमत्कारजनने वाच्यमुखनिरीक्षकम्, उपरि उल्लिखितेषु गुणीभूतव्यङ्ग्यकाव्यभेदेषु 'काक्वाक्षिप्तं' आनन्दवर्धनेन व्याख्यातम् –

अर्थान्तरगति काक्वा या चैषा परिदृश्यते।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥[२१]

यथा – स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः, अपि च गुणीभूतव्यङ्ग्यकाव्ये व्यङ्ग्यार्थं वाच्यार्थसिद्धये सहायकं भवति इति आनन्दवर्धनेन पुनः पुनः निगदितम्। मम्मटकथितं सन्दिग्धप्राधान्यं गुणीभूतव्यङ्ग्यकाव्यं *ध्वन्यालोके* परोक्षतया आलोचितम्, उक्तञ्च *ध्वन्यालोके* यथा –

प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना ॥[२२]

अर्थात् कदाचित् लक्ष्ये परीक्ष्यमाणे ध्वनिर्गुणीभूतव्यङ्ग्ययोः मार्गः कश्चिद् संकीर्णः दृश्यते। युक्त्या विचार्य्य तत्र व्यपदेशः कर्तव्यः, न सर्वत्र ध्वनिरागिणा भवितव्यम्। उदाहरणद्वारेण ध्वन्यालोके आलोच्यते यथा –

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

इत्यत्र 'निर्वचनं जघान' इति प्रतिषेधमुखेन व्यङ्ग्यस्यार्थस्योक्त्या किञ्चिद् विषयीकृतत्वात् गुणीभाव एव शोभते। पुनः यदा वक्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येन प्रतीयते, तदा व्यङ्ग्यस्य प्राधान्यम्, यथा –

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥

*काव्यप्रकाशस्य* अनन्तरं जयदेवविरचिते *चन्द्रालोके* गुणीव्यङ्ग्यकाव्यस्वरूपं समासतः उल्लेखनीयम्, अत्र ग्रन्थकारः प्रथमतः गुणीभूतव्यङ्ग्यकाव्यस्य प्रकारत्रयमुल्लिखितवान्। यथा – *क्वचिद्व्यक्तिव्यञ्जनैव चारुतां मुञ्चतीत्येकः प्रकारः, क्वचिद्व्यङ्ग्योऽर्थः स्वभावत एव चारुतां मुञ्चतीत्यपरः क्वचिच्चारुरप्यर्थः चारुतरसन्निधानादचारुरित्यपरः*। ग्रन्थकारेण परक्षणे एव मम्मटस्य पदवीमनुसृत्य गुमीभूतव्यङ्ग्यकाव्यस्य अष्टभेदाः उदाहरणयोगेन आलोचिताः। उक्तञ्च ग्रन्थस्य वृत्तौ – *मतान्तरे गुढव्यङ्ग्यादयोऽष्टौ मध्यमकाव्यभेदास्तत्र सोदाहरणमगूढमाह*[२३]। परन्तु ग्रन्थस्य आलोचनायां न किमपि काठिन्यं वर्तते, अपि श्लोकमध्ये एव संज्ञा उदाहरणञ्च द्वयमालोचितम्। यथा –

अपरस्य रसादेश्चेदङ्गमन्यद्रसादिकम्।
हा हा मत्कुचकाश्मीरलिप्तं भिन्नमुरः शरैः ॥[२४]

यत्र व्यङ्ग्यं रसादेरङ्गं तदपराङ्गमित्याह – अपरस्येति। उदाहरणम् – हाहेति। रणभुवि पतितं कान्तमवलोक्य कस्याश्चिदुक्तिः, अत्र शृङ्गारः करुणस्याऽङ्गम्। अतःपरं आनुमानिकचतुर्दशशताब्द्यां विश्वनाथाचार्येण साहित्यदर्पणे पूर्वाचार्याणां पदमीमनुसृत्य गुणीभूतव्यङ्ग्यकाव्यस्य अष्टभेदाः प्रदर्शिताः, उक्तञ्च *साहित्यदर्पणे*–

अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये
तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यासिद्ध्यङ्गम्।

सन्धिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्

व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥[२५]

एतदवश्यमेवोल्लेखणीयं *साहित्यदर्पणे* एकाधिकोदाहरणद्वारेण गुणीभूतव्यङ्ग्यकाव्यभेदान् आचार्यः विश्वनाथः आलोचितवान् । कदापि आचार्य *ध्वन्यालोक*मनुसरणं कृत्वा पुनः पुनः स्वमतमुपस्थापयति स्म । *ध्वन्यालोके* आलोचितं दीपक-तुल्ययोगितादिषु उपमालंकारः व्यङ्ग्यः, स गुणीभूतव्यङ्ग्यस्य एव, काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् । अतः साहित्यदर्पणकारः *ध्वन्यालोक* इति ग्रन्थस्थितं मतमुल्लिख्य उक्तवान् –

तदुक्तं ध्वनिकृता

अलंकारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः ॥[२६]

पुनः अपरमेकं वक्तव्यं यथा यत्र वस्त्वलंकाररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावस्तत्र प्रधानकृत एव काव्यव्यवहारः इति प्रतिस्थापयितुं ध्वन्यालोकम् उद्धृत्य उक्तवान् विश्वनाथः –

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् ।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥[२७]

अर्थात् वाच्य-व्यङ्ग्ययोः प्राधान्यविषये सन्देहोपस्थिते जाते रसादितात्पर्यपर्यालोचनमावश्यकम् ।

आनुमानिक-सप्तदशशताब्द्याम् आचार्येण जगन्नाथेन काव्यस्य चत्वारः भेदाः आलोचिताः, यथा उत्तमोत्तमकाव्यम्, उत्तमकाव्यम्, मध्यमकाव्यम्, अधमकाव्यम्, तन्मध्ये उत्तमोत्तमकाव्यं व्यङ्ग्यार्थप्रधानं काव्यमिति सर्व्वैर्ज्ञायते । जगन्नाथप्रदत्तम् उत्तमकाव्यं मध्यमकाव्यं इति द्वयं गूणीभूतव्यङ्ग्यकाव्यरूपेण वक्तुं शक्यते । उत्तमकाव्ये व्यङ्ग्यमप्रधानमेव सत् चमत्कारकारणं भवति, उक्तञ्च – *यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद् द्वितीयम्*[२८] । अत्र व्यङ्ग्यं वाच्यापेक्षया प्रधानीभूतं सत्यपि च व्यङ्गान्तराद्गुणीभूतं भवति । यतः व्यङ्ग्यं वाच्यार्थात् प्रधानीभूतमत्र तस्मात् कारणात् इदं काव्यं यथार्थरूपेण गुणीभूतव्यङ्ग्यकाव्यं वक्तुं न शक्यते । ईदृशं काव्यं जगन्नाथस्य पूर्वे कोऽपि न उक्तवान् । यतः वाच्यापेक्षया व्यङ्गमत्र प्रधानीभूतं तस्मात् कारणात् इदं काव्यं ध्वनिकाव्यरूपेण जगन्नाथः स्वयमेव स्वीकृतवान्, उक्तञ्च – *वाच्यापेक्षया प्रधानीभूतं व्यङ्ग्यान्तरमादाय गुणीभूतं व्यङ्ग्यमादायातिव्याप्तिवारणायावधारणम्* इति । तेन तस्य ध्वनित्वमेव ।

यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारः ।
तत् मध्यमकाव्यम् गुणीभूतव्यङ्ग्यं काव्यं वा ॥[२९]

उदाहरणद्वारेण जगन्नाथाचार्यः आलोचितवान् । यमुनावर्णनप्रसङ्गे उक्तवान् – *तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभूजायमानाया भगवत्या भागीरथ्याः सखी* इति । अत्र उत्प्रेक्षा वाच्यैव चमत्कृतिहेतुः, श्वैत्यत्व-पातालतलचुम्बित्वादीनां व्यङ्ग्यचमत्कारो लेशतया सन्नप्युत्प्रेक्षाचमत्कृतिजठरनिलीन भवति इति ग्रन्थकारस्य मतम् । अत्र जगन्नाथाचार्योऽपि *ध्वन्यालोका*नुसारेण उक्तवान् यथा – *न तादृशोऽस्ति कोऽपि वाच्यार्थो यो मनागनामृष्टप्रतीयमान एव स्वतो रमणीयतामाधातुं प्रभवति*[३०] इति । इदमेव उपमया द्रृढयति – *नागरिकेतरनायिकाकल्पितकाश्मीरद्रव्याङ्ग्यरागनिगीर्णनिजाङ्गगौरिमेव प्रतीयते*[३०] इति । अर्थात् नागरिकेतरनायिकायाः ग्राम्यनायिकायाः स्वाङ्गजातं गोरवर्णं यथा सहजातसुन्दरं तथैव

गुणीभूतव्यङ्ग्यकाव्ये निहितं व्यङ्ग्य स्वाभाविकसुन्दरम् । गोरवर्णस्योपरि ग्राम्यनायिका अधिकसौन्दर्यं वर्धनाय काश्मीराङ्गरागस्य लेपनं व्यङ्ग्यचमत्कृतेः उपरि वाच्यचमत्कृतितुल्यम् अर्थात् ईदृश-वाच्यचमत्कारः न सहजातः भवति, इति हि निष्कर्षः जगन्नाथाभिमतस्य।

अतः वक्तुं शक्यते व्यङ्ग्यार्थमेव काव्यस्य मूलीभूतं विषयम् । *ध्वन्यालोक*स्य पश्चात् ध्वनिवादिनः आचार्याः व्यङ्ग्यार्थमाधारीकृत्य काव्यभेदमालोचनाकाले पुनः पुनः दर्शयन्ति अनुभवन्ति च काव्यसौन्दर्यं व्यङ्ग्यार्थस्योपरि निहितम्, ध्वनिकाव्ये व्यङ्ग्यप्रधाने काव्ये व्यङ्ग्यस्य चारुत्वं विद्यते इति अस्मिन् विषये कोऽपि प्रश्न न उत्थाप्यते, परन्तु गुणीभूतव्यङ्ग्यकाव्येऽपि व्यङ्ग्यस्य कथं चारुत्वमस्ति वा स्थातुं शक्यते इति आनन्दवर्धनः अभिनवगुप्तश्च इति आचार्यौ चिन्तितवन्तौ। तथा तौ आलोचितवन्तौ ग्रन्थमध्ये टीकामध्ये, परवर्तिकाले स्पष्टतया तयोर्मतं कोऽपि समर्थितवान् कोऽपि स्वकीयमतमुपस्थाप्य तयोराचार्ययोः मतमङ्गीकृतवान् इति हि निष्कर्षः अस्य प्रबन्धस्य, अलमतिविस्तरेण।

**संकेतपञ्जिः**

ध्व. = ध्वन्यालोकः

लो. = लोचनः

प्र. उ = प्रथमोद्द्योतः

तृ. उ = तृतीयोद्द्योतः

का. प्र. = काव्यप्रकाशः

प्र. उल्. = प्रथमोल्लासः

र. ग. = रसगङ्गाधरः

प्र. आ. = प्रथमाननः

च. लो. = चन्द्रालोकः

अ. म. = अष्टममयूखः

सा. द. = साहित्यदर्पणः

च. प. = चतुर्थः परिच्छेदः

सम्पा. = सम्पादकः

**उल्लेखपञ्जिः**

१. ध्व. प्र. उ.
२. का. प्र., प्र. उल्.
३. र. ग. प्र. आ.
४. ध्व., लो., प्र. उ.

५. ध्व., प्र. उ.
६. तत्रैव, लो.
७. तत्रैव, तृ. उ.
८. तत्रैव, लो.
९. तत्रैव, प्र. उ.
१०. तत्रैव, तृ. उ., लोचनः
११. तत्रैव, प्र. उ.
१२. तत्रैव, तृ. उ., लोचनः
१३. तत्रैव, तृ. उ.
१४. तत्रैव
१५. तत्रैव, तृ. उ., लोचनः
१६. तत्रैव, तृ. उ., वृत्तिः
१७. तत्रैव, तृ. उ.
१८. का. प्र, प्र. उल्.
१९. का. प्र.
२०. ध्व. तृ. उ.
२१. तत्रैव
२२. च. लो., अ. म.
२३. तत्रैव, ४
२४. सा. द., च. प.
२५. तत्रैव
२६. तत्रैव
२७. र. ग., प्र. आ.
२८. तत्रैव
२९. तत्रैव
३०. तत्रैव

**परिशीलितग्रन्थपञ्जिः**

आनन्दवर्धनः । *ध्वन्यालोकः* । सम्पा. अशोककुमार वन्द्योपाध्याय । कलकाता: संस्कृत पुस्तक भाण्डार, २००८ ।

आनन्दवर्धनः । *ध्वन्यालोकः* । सम्पा. वद्रीनाथ शर्मा । वाराणसी: चौखम्बा संस्कृत सीरीज आफिस, १९९४ ।

जगन्नाथः । *रसगङ्गाधरः* । सम्पा. मदनमोहन झा । वाराणसी: चौखम्बा विद्याभवन, २००८ (पुनर्मुद्रितसंस्करणम्) ।

जयदेवः । *चन्द्रालोकः* । सम्पा. गङ्गासागर राय । वाराणसी: चौखम्भा संस्कृत भवन, वि. स. २०६१ (नवमसंस्करणम्) । (काशी संस्कृत ग्रन्थमाला ७५) ।

मम्मटभट्टः । *काव्यप्रकाशः* । नइ दिल्ली: परिमल पब्लिकेशन्स, २००८ (पुनर्मुद्रितसंस्करणम्) ।

विश्वनाथकविराजः । *साहित्यदर्पणः* । सम्पा. गुरुणाथ विद्यानिधि, धीरेन्द्रनाथ भट्टाचार्य । कलकाता: संस्कृत वुक् डिपो, रामनवमी १३७१ (चतुर्थसंस्करणम्) ।

# अधिकरणकारकम् : तार्किक-शाब्दिकदृष्ट्या तुलनात्मकमालोचनमेकम्

स्वरूप-सिंहः

**सारसंक्षेपः**

अधिक्रियन्ते (क्रियाः) यस्मिन् इत्यस्मिन् अर्थे अधिपूर्वकस्य कृधातोः उत्तरम् अधिकरणार्थक-ल्युट्-प्रत्यये अधिकरणशब्दो जायते। अर्थात् यत्र क्रियायाः निवासः, आश्रयो वा।

अधिकरणशब्दे प्रयुक्तस्य अधि इत्यस्य निपातरूपेण सप्तमीविभक्तेः नियामकत्वरूपेण च व्यवहारः वैदिककालादेव दरीदृश्यते। यथा – 'वयो न सीदन्नधि वर्हिषि प्रिये ' इति। 'प्रतीदं विश्वं रोचते यत् किञ्च पृथिव्यामधि' इति। 'यत् सुवाचो वदथनाध्यप्सु' इति।

अधिकरणस्य संज्ञाविषये पाणिनिना सूत्रितम् 'आधारोऽधिकरणम्' इति। आध्रियते अस्मिन्निति आधारः । आङ्पूर्वकस्य धृधातोः शेषे 'अध्यायन्यायोद्यावसंहाराश्च' इति सूत्रेण अधिकरणे घञ्प्रत्यये आधारशब्दो निष्पन्नः। परन्तु कस्य आधारः इति प्रश्ने क्रियाया आक्षेपो भवति । तेन क्रियाया आधारस्यैव अधिकरणत्वमिति अर्थो भवेत्। परन्तु तदसम्भवम्। कारणं क्रियाया आधरो भवति कर्म कर्ता वा। यथा आदित्यं पश्यति इत्यादिस्थले दर्शनादयः क्रियाः तत्रैव स्यात्, यः कर्ता, यः पश्यतीति। किञ्च ओदनं पचति इत्यादौ विक्लेदनप्रभृतयः क्रियाः कर्मरूपे ओदने एव वर्तन्ते । अतः क्रियाया आधारस्यैव अधिकरणत्वमित्युक्ते पूर्वोक्तस्थलद्वये अधिकरणत्वापत्तिः निश्चिता स्यादिति।

एवं प्रकारेण अधिकरणस्वरूपविषये वैयाकरणेषु भर्तृहरेः, कौण्डभट्टस्य, नागेशादीनां मतं तथा नैयायिकेषु भवानन्दस्य, जगदीशतर्कालङ्कारस्य, गदाधरादीनां मतमत्र सम्यक् उपस्थाप्य विचार्यते।

**कुञ्चिकाशब्दः**

आधारः, क्रिया, कारकम्, सम्बन्धः, कर्मप्रवचनीयः, शक्तिश्च।

**व्युत्पत्तिः ।**

अधिक्रियन्ते (क्रियाः) यस्मिन् इत्यस्मिन् अर्थे अधिपूर्वकस्य कृधातोः उत्तरम् अधिकरणार्थक-ल्युट्-प्रत्यये अधिकरणशब्दो जायते। अर्थात् यत्र क्रियायाः निवासः, आश्रयो वा।

अधिकरणशब्दे प्रयुक्तस्य अधि इत्यस्य निपातरूपेण सप्तमीविभक्तेः नियामकत्वरूपेण च व्यवहारः वैदिककालादेव दरीदृश्यते। यथा – 'वयो न सीदन्नधि वर्हिषि प्रिये ' इति। [१]'प्रतीदं विश्वं रोचते यत् किञ्च पृथिव्यामधि'[२]इति। 'यत् सुवाचो वदथनाध्यप्सु'[३] इति।

अधि इत्यस्य प्रयोगेण क्वचित् पञ्चम्याः प्रयोगः प्राप्यते, तथापि तादृशप्रयोगत्वं गौणरूपेण भवति, तथा अवसरः अत्यल्प एव। वस्तुतः सप्तम्याः प्रयोगाधिक्यम्। तदर्थं सप्तम्या अर्थे अव्ययीभावसमासः भवति। यथा अधिहरि, अधिकन्धरम्[४] । पाणिनिना तु अधि इत्यस्य ईश्वरत्वं प्रभुत्वं स्वीकृत्य कर्मप्रवचनीयस्य प्रयोगः कृतः। तथाहि सूत्रम् – 'अधिरीश्वरे' [५]। तेन कर्मप्रवचनीययुक्ते सप्तम्या विधानमपि कृतमस्ति 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'[६] इति सूत्रेण। यथा – अधि ब्रह्मदत्ते पाञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः इति। यस्य चेश्वरवचनम् इत्यंशे ईश्वरशब्दः भावप्रधाने वर्तते। अतः स्वामिनि तथा अधिकृतपदार्थे अपि विकल्पेन सप्तमी विधीयेते।[७]

अधि इत्यस्य एतादृशार्थप्रयोगविवेचनसन्दर्भे अधिकरणसंज्ञायाः सार्थकता प्रतीयते। आधिक्यवाचिना अधि इत्यनेन सह करणस्यापि योगोऽस्ति। तदनुसारं करणापेक्षया अधिकव्याप्तिविशिष्टस्य कारकस्य अधिकरणत्वं सङ्गच्छते।

**लक्षणम्** ।

अधिकरणस्य संज्ञाविषये पाणिनिना सूत्रितम् 'आधारोऽधिकरणम्'[८] इति। आध्रियते अस्मिन्निति आधारः । आङ्पूर्वकस्य धृधातोः शेषे 'अध्यायन्यायोद्यावसंहाराश्च'[९] इति सूत्रेण अधिकरणे घञ्प्रत्यये आधारशब्दो निष्पन्नः। परन्तु कस्य आधारः इति प्रश्ने क्रियाया आक्षेपो भवति । तेन क्रियाया आधारस्यैव अधिकरणत्वमिति अर्थो भवेत्। परन्तु तदसम्भवम्। कारणं क्रियाया आधरो भवति कर्म कर्ता वा। यथा आदित्यं पश्यति इत्यादिस्थले दर्शनादयः क्रियाः तत्रैव स्यात्, यः कर्ता, यः पश्यतीति। किञ्च ओदनं पचति इत्यादौ विक्लेदनप्रभृतयः क्रियाः कर्मरूपे ओदने एव वर्तन्ते । अतः क्रियाया आधारस्यैव अधिकरणत्वमित्युक्ते पूर्वोक्तस्थलद्वये अधिकरणत्वापत्तिः निश्चिता स्यादिति। कारणम् 'आकडारादेका संज्ञा[१०] इति नियमेन एका संज्ञैव ग्रहणीया। किञ्च, कर्तृसंज्ञायाः कर्मसंज्ञायाः च परत्वात् तथा अनवकाशत्वाच्च तयोरेव प्राप्तिः।[११]एतदर्थमेव दीक्षितेन आधारोऽधिकरणम् इति सूत्रस्यार्थः कृतः -'कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात्'[१२]इति।

अर्थात् क्रियाया आधारः प्रकारद्वयेन भवितुमर्हति साक्षात् परम्परया च । साक्षात् क्रियाया आधारः इत्युक्ते कर्तृसंज्ञाया अथवा कर्मसंज्ञायाः प्रसङ्गः। परन्तु परम्पपराक्रमेण इत्युक्ते कर्तुः अथवा कर्मणः धारणद्वारा तयोः आश्रितक्रियाया आधाररूपेण अधिकरणस्यैव प्रसङ्गः। यथा कटे आस्ते इत्यादौ स्थितिक्रियायाः साक्षाद्भावेन आधारो भवति आसनक्रियायाः कर्ता रामश्यामप्रभृतयः । पुनः रामादिकर्तारं धारयतीति हेतोः रामादिकर्त्राश्रितासनक्रियायाः आधारत्वात् कटस्यापि अधिकरणत्वं सङ्गच्छते। एतत् खलु कर्तृद्वारा तदाश्रितक्रियाधारस्य अधिकरणस्योदारहणम्। एवं कर्मद्वारा तदाश्रितक्रियाधारस्य उदाहरणं हि स्थाल्यां पचति इति। स्थाल्यामोदनं पचति इत्यादौ उदनरूपकर्मणि विक्लेदनरूपक्रिया वर्तते। ओदनरूपं कर्म धारयतीति हेतोः ओदनाश्रितविक्लेदनक्रियाया आधारत्वात् स्थाल्याः अधिकरणत्वमिति।

एवं पूर्वोक्तोदाहरणद्वये परम्परासम्बन्धो भवति समवायिसंयोगसम्बन्धः। कटे आस्ते इत्युदाहरणे आसनक्रियायाः समवायिनः भवन्ति रामश्यामप्रभृतयः कर्तारः। तैः सह कटस्य संयोगसम्बन्धः। स्थाल्यामोदनं पचति इत्यादौ विक्लेदनक्रियायाः समवायीनि खलु ओदनप्रभृतीनि कर्माणि। तैः सह स्थाल्याः संयोगसम्बन्धः। कर्तारं कर्म च व्यवहित्य तत्तदाश्रितक्रियायाः परम्पराक्रमेण आधारस्य अधिकरणत्वमिति खलु वाक्यपदीयकारस्य मतम्।

**नैयायिकमतम्** ।

**भवानन्दमतम् ।**

अधिकरणत्वं च न धर्मसम्बन्धः। सम्बन्धस्य संयोगादिरूपस्य द्विनिष्ठत्वेन बदरादेरपि कुण्डाद्याधारत्त्वापत्त्या कुण्डे वदरम् इतिवत् वदरे कुण्डम् इत्यपि प्रयोगापत्तिः। कुण्डं न बदरधर्म इति न वक्तव्यम्। तर्हि स्वधर्मसम्बन्धः अधिकरणत्वमिति पर्यवसितम्। स्वधर्मत्वञ्च स्वाधेयत्वम्। स्वाधेयत्वञ्च यदि स्वनिष्ठाधिकरणतानिरूपकत्वम्, तदा अन्योन्याश्रयः, अधिकरणत्वज्ञानाधीनमाधेयत्वज्ञानम्। आधेयत्वज्ञानाधीनम् अधिकरणज्ञानमिति।

उत्पत्तये स्थितये, ज्ञप्तये च अपेक्षणीयत्वं न अधिकरणत्वम्। उत्पत्तये अपेक्षणीयञ्च कार्यस्य समवायिकारणम्। स्थितये अपेक्षणीयं घटादेः भूतलादि। ज्ञप्तये अपेक्षणीयं जात्यादेः समवायिव्यक्तिः संयुक्तसमवायरूपसन्निकर्षघटकतया अभावसमवाययोश्च स्वरूपसम्बन्धी इति वाच्यम्। अपेक्षणीयत्वं हि न जनकत्वम्। कारणं येषां जातीनां प्रत्यक्षो न भवति यथा पिशाचादीनाम् अधिकरणे अव्याप्तिः स्यात्। वस्तुतः अतीन्द्रियवस्तूनां लौकिकप्रत्यक्षत्वं न भवति इति हेतोः इन्द्रियसन्निकर्षान्तर्गताभावात् तत्र जनकत्वं न विद्येत्।

एवं स्थाल्यामोदनं पचतीति स्थले अधिकरणत्वं स्वीकुर्ता ग्रन्थकारेण भवानन्देन कारकचक्रग्रन्थे उदीरितम् –

"स्थाल्यामोदनं पचतीत्यादावधःसन्तापनस्य पाकस्य साक्षात् स्थाल्यवृत्तित्वेऽपि कर्मघटितपरम्परयाऽधिकरणत्वम् आधेयत्वं वा सप्तम्यर्थः पाकादावन्वेति, अनुभवबलेन तथैव व्युत्पत्तेरिति, वृद्धाः तत्राहुः– 'कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥' इति। एवञ्च कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वमधिकरणत्वम्" इति।[१३]

वस्तुतः परम्परया क्रियाया आश्रयत्वमेव अधिकरणत्वम्। तस्मादेव कोऽपि चत्वरे स्थित्वा दीर्घदण्डसाहाय्येन काष्ठादिपरिचालनद्वारा गृहमध्ये एव पाकं करोति, तदा यद्यपि कर्तृद्वारा क्रियाश्रयत्वं गृहे नास्ति तथापि गृहे पचति इति प्रयोगः स्यादेव। किञ्च, परम्परया इति पदं निष्प्रयोजनमित्यपि वक्तुं न शक्यते। कारणम् अधःसन्तापनरूपपाकक्रिया स्थाल्याः अधः अग्निसंयोगजनककाष्ठवह्न्यादिगतव्यापारस्वरूपः। तत् खलु साक्षात् सम्बन्धेन काष्ठे, अग्नौ वा अस्ति। अतः तत्रापि अधिकरणत्वापत्तिः दुर्वारा स्यात्। परन्तु नेष्टापत्तिः। काष्ठे पचति, वह्नौ पचति, इत्यादिप्रयोगाप्रसिद्धेः। अपि च पथि गच्छति इतिवत् स्वस्मिन् गच्छति इति प्रयोगः कदापि न भवति। अतः परम्परया इति पदमवश्यमेव निवेशनीयम्।

**जगदीशमतम् ।**

शब्दशक्तिप्रकाशिकायां जगदीशाचार्येण अधिकरणत्वं लक्षयति –

> "यत्क्रियायां यादृशार्थः सप्तम्या विग्रहस्थया।
> बोध्यस्तस्यां तदेवाधिकरणं नाम कारकम्॥"इति।

क्रिया धात्वर्थः। यद्धातूपस्थाप्ययादृशार्थे विग्रहस्थया सप्तम्या यो यः स्वार्थः अनुभाव्यते तदेव तद्धातूपस्थाप्यतादृशक्रियायाम् अधिकरणं नाम कारकम्। मतस्यास्य व्याख्यानं क्रियते-

"तथा च यादृशार्थो यद्धातूपस्थाप्ययादृशार्थविशेष्यतानिरूपितान्वयबोधीयसप्तमीज्ञाप्रयोज्य-प्रकारताश्रयः कारकत्वे सति स तद्धातूपस्थाप्यतादृशार्थेऽधिकरणत्वम् इति पर्यवसितम्"[१४] इति।

ग्रामे गन्ता इत्यत्र धात्वर्थे गतौ ग्रामनिष्ठमधिकरणत्वं तन्निरूपितम् आधेयत्वं वा सप्तम्या अनुभाव्यते इति तदेव तद्धातूपस्थाप्यतादृशक्रियायाम् अधिकरणकारकम्।

यद्यपि चैत्रादिनिष्ठायाः गतेः समवायादिना ग्रामादिवृत्तित्वं बाधितम्। कालिकादिना तद्वृत्तित्वं चातिप्रसक्तम्। 'स्पन्दे गच्छति' इत्यपि प्रयोगापत्तेः। तथापि ग्रामे गच्छत्ययं न तु गृहादौ इति अनुभावसाक्षिकेन स्वरूपसम्बन्धविशेषेण ग्रामादिवृत्तित्वं बोध्यम्।

जगदीशमते अधिकरणपदस्य शक्यतावच्छेदकं तु न सम्बन्धमात्रम्। घटे घटतादात्म्यरूपसम्बन्धसत्त्वेन घटस्य घटाधिकरणत्वापत्तेः। नापि वृत्तिनियामकः सम्बन्धस्तथा। कुण्डे बदरस्येव बदरेऽपि कुण्डस्य अधिकरणत्वापत्तेः। वृत्तिनियामकसंयोगस्य द्विनिष्ठत्वात् इति।

नापि आधेयतानिरूपकत्वम् अधिकरणत्वम्। तुल्यन्यायेन अधिकरणतानिरूपकत्वस्यैव आधेयतारूपत्वेन अन्योन्याश्रयप्रसङ्गात्।[१५]

**गदाधरमतम् ।**

आधारसप्तम्या आधेयत्वमर्थः। तस्य क्रियायामन्वयः। आधारत्वस्य सप्तम्यर्थत्वे 'भूतले न घटः' इत्यादौ निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताक एव अधिकरणत्वाभावो बोधनीयः। आधाराधेयभावश्च न संयोगादिरूपसम्बन्धात्मकः। कुण्डादिसंयोगिनः वदरादेरपि कुण्डाधारताप्रसङ्गात्। संयोगस्य समवायेन उभयत्र सत्त्वात्। अपि तु पदार्थान्तरमेव। अथवा उक्तातिप्रसङ्गभिया संयोगेन आधारत्वमेव अतिरिक्तम्। समवायावच्छिन्नम् आधारत्वं तु समवायरूपमेव। वस्तुतः सम्बन्धान्तरस्य विशिष्टबुद्ध्यनुरोधेन एव कल्पनीयतया संयोगस्य आधारत्वरूपत्वे बदरे कुण्डाधारत्वप्रसङ्गः दुर्वारः। उक्ताधिकरणत्वस्य तु विशिष्टबुद्ध्यनुरोधेन एव कल्पनीयतया यत्रैव विशिष्टप्रतीतिः तत्रैव कल्पनाददोषः । न च संयोगवत् समवायस्यापि सम्बन्धत्वेन द्विनिष्ठतया पटस्य रूपाधिरणतावत् रूपस्य पटाधिकरणताप्रसङ्ग इति वाच्यम्। तथा सति अधिकरणत्वस्य अपि सम्बन्धत्वेन द्विनिष्ठतया तादृशातिप्रसङ्गस्य दुर्वारत्वात्।

यदि च आधारताया आधारे अनुयोगित्वं सम्बन्धः आधेये च प्रतियोगित्वमिति सम्बन्धवैलक्षण्येव अतिप्रसङ्गवारणसम्भवात् अतिरिक्ताधारतायां प्रमाणाभावः इति[१६]।

**गोकुलनाथमतम् ।**

> "ङ्योस्सुपस्सप्तमी तत्रानुबन्धौ ङिसुपोर्ङपौ।
> तत्राधिकरणं सप्तम्यर्थो धात्वर्थसङ्गतम्।।" इति।[१७]

अधिकरणत्वम् आधेयत्वं वा सप्तम्यर्थः। तच्च आधेयत्वं स्थाल्यामोदनं पचतीत्यादौ कर्मघटितसामानाधिकरण्येन फले अन्वेति। स्वं विक्लित्तिरूपं फलम्। स्थालीनिरूपिता या आधेयता तदाश्रयः ओदनवृत्तिविक्लित्त्यनुकूलव्यापारानुकूलकृतिमानिति बोधः। गेहे चैत्रः पचति इत्यादौ कर्तृघटितसामानाधिकरण्येन व्यापारे अन्वेति। तेन गेहनिरूपिताधेयताश्रयचैत्रवृत्तिः या विक्लित्त्यनुकूला क्रिया तदनुकूलकृतिमान् चैत्रः इति बोधः। किञ्च, यस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते इत्यादौ अग्निपदम् अग्न्यधिष्ठितस्थालीपरम्। तदाधेयत्वं सामानाधिकरण्येन पच्यर्थफले अन्वेति।

एवम्प्रकारेण गोकुलनाथमहाभागेन अन्ततो गत्वा भर्तृहरिमतमुद्धृत्य उच्यते- "भवतु वा परम्परया वह्न्याधेयत्वमेव सप्तम्यर्थः। अत एव तच्छब्देन वह्नेः परामर्शोऽपि संघटते। मिथिलास्थो राजा पाटलिपुत्रे ब्राह्मणेभ्यो ददातीत्यादौ सप्तम्यर्थो न सम्प्रदानघटितसामानाधिकरण्येन धत्वर्थेऽन्वेति, किन्तु साक्षादेव ब्राह्मणेषु। एवं गिरौ वृक्षात् पर्णं पततीत्यत्रापि सप्तम्यर्थो वृक्षेऽन्वति, न त्वपादानघटितपरम्परया पतने " इति।[१८]

**गिरिधरमतम् ।**

विभक्त्यर्थनिर्णयेऽपि गिरिधराचार्येण 'आधारोऽधिकरणम्' इति सूत्रमुल्लिख्य कर्तृकर्मद्वारा क्रियाया आधारस्यैव अधिकरणत्वं स्वीकृतम्। तन्मते अधिकरणादेः सप्तम्यर्थस्य कर्तृकर्मान्यतरद्वारकस्यैव क्रियायामन्वयत्वात् कारकत्वम्, न तु कारकान्तरद्वारकाधिकरणस्य क्रियायामन्वयः। तथाहि –

> "कर्तृकर्मव्यवहितमसाक्षाद्धारयत् क्रियाम्।
> उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥" इति।

उपकुर्वत् क्रियासहकारि । निरधिकरणयोः कर्तृकर्मणोः क्रियासिद्ध्यनुपार्जकत्वात् अधिकरणस्य क्रियासिद्धिसहकारित्वम्। न च गगनमस्ति, गगनं जानाति इत्यादौ निरधिकरणस्य कर्तुः कर्मणश्च क्रियासिद्ध्युपयोगित्वात् नेदं युक्तमिति वाच्यम्। कालाधिकरणस्य गगनादेः सत्तादिक्रियाकर्तृत्वकर्मत्वयोगित्वात् इदानीं गगनमस्ति, इदानीं गगनं जानातीति प्रत्ययात्।

एवं काशीस्थः राजा मथुरायां ब्राह्मणेभ्यः ददाति, गिरौ वृक्षात् पर्णमधः गच्छति इत्यादौ सम्प्रदानाधिकरणयोः क्रियाविषयकप्रतीतिविषयत्वात् क्रियायां कुतः न अन्वयः इति न वाच्यम्। निर्वत्यविकार्ययोरेव कर्मणोः कर्तृत्वविवक्षायां कर्मवदभावस्य इव कर्तृकर्माधिकरणयोः एव क्रियायामन्वयस्य आचार्यैः अभ्युपगमात्। तस्मात् कर्तृकर्मान्यतरद्वाराधिकरणं क्रियान्वयित्वात् कारकमिति।[१९]

**वैयाकरणमतम् ।**

**भर्तृहरिमतम् ।**

अधिकरणलक्षणप्रसङ्गे भर्तृहरिः प्राह –

> "कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
> उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥"[२०]इति ।

अर्थात् कर्तृकर्मद्वारिकां क्रियां क्रियते यया इति करणव्युत्पत्त्या व्यापाररूपाम्, क्रियते या इति कर्मव्युत्पत्त्या फलरूपां वा असाक्षाद् धारयत् सत् फलसिद्धिरूपायां क्रियासिद्धौ उपकुर्वत् कारकं शास्त्रे अधिकरणं स्मृतम्।

वस्तुतः लोके अधिकरणविशेषवाचकेन अधिकरणपदेन द्रव्यगुणक्रियाविषयकम् अधिकरणम् उच्यते। शास्त्रे तु अस्मिन् कारकप्रकरणात् क्रियाक्षेपे क्रियायामेव असाक्षाद् धारणरूपेण उपकारविशेषेण अधिकरणसंज्ञा व्यवतिष्ठते। तत्र व्यापाररूपा क्रिया कर्तरि, फलरूपा च कर्मणि व्यवतिष्ठते इति तयोः क्रियाधारणात् अधिकरणसंज्ञावचनबलात् पर्यायेण स्यात्। भावकर्मणोरिव कर्मस्थक्रियाविषया वा कर्तृसंज्ञा 'पच्यते तण्डुलः स्वयमेव' इतिवत् कर्तृस्थक्रियाविषया वा कर्मसंज्ञा 'दृश्यते घटः स्वयमेव', 'गम्यते ग्रामः स्वयमेव' इतिवत् स्यादेव इति तत्र यथासूत्रं कर्तृकर्मसंज्ञयोः सत्त्वे एव अधिकरणसंज्ञावचनबलात् अधिकरणसंज्ञा प्रसज्यते। एतदर्थमेव कर्तृकर्मव्यवहितामित्युक्तम्।

कटे आस्ते, स्थाल्यां पचति इत्यत्र अधिकरणकारकं कर्तृकर्मधारणात् कर्तृकर्मसमवेतायां क्रियायां पारम्पर्येण उपकारकम्। आधाराभावे हि कर्तृकर्मणी क्रियोपकारं न कुर्याताम् इति आधारः कर्तृकर्मणोः धारणात् उपकुर्वन् तत्स्थां क्रियामपि उपकरोति।

'साधकतमं करणम्'[२१] इत्यत्र तमब्ग्रहणेन ज्ञाप्यते कारकाधिकारे अतिशययोगः नास्तीति। तेनात्र स्थाल्यां पचति इत्यादौ कर्मपरम्परया क्रियाधारके स्थाल्यादौ कटे शेते इत्यादौ च कर्तृपरम्परया क्रियाधारके कटादौ अधिकरणसंज्ञायाः सावकाशत्वात् अनपवादत्वेन साक्षात् क्रियाधारकयोः कर्तृकर्मणोः परत्वात् अधिकरणसंज्ञां बाधित्वा कर्तृकर्मसंज्ञे एव कारकाणाञ्च क्रियानिमित्तत्वञ्च यथाकथञ्चित् साक्षात् परम्परया वा भवदाश्रीयते इति अधिकरणस्य कर्तृकर्मव्यवधानेन क्रियोपकारकत्वं कारकत्वेन सह न विरुद्ध्यते। व्यवहिताम् इत्युक्तेऽपि असाक्षादिति वचनं लोकानुसारेणापि अधिकरणपदार्थव्यवस्थायाम् अधिकरणस्य क्रियाधारणं प्रति कर्तृकर्मव्यवधानस्य प्रागुक्तस्य परिपोषणार्थम्।

**कौण्डभट्टमतम् ।**

कौण्डभट्टमते 'आधारोऽधिकरणम्' इत्यत्र आधारत्वं नाम आश्रयत्वम्। तत्र आश्रयांशः शक्यः। आश्रयत्वं शक्यतावच्छेदकम्। न चाश्रयत्वमात्रेण कर्तृकर्मकरणानाम् आधारसंज्ञा स्यात्। स्यादेव यदि ताभिः अस्याः बाधो न स्यात्।

यद्यपि 'कारके'[२२] इत्यधिकृत्य विहितायाः सप्तम्याः क्रियाश्रय एव तात्पर्यम्। तथापि अत्र कर्तृकर्मद्वारा क्रियाशयत्वमस्य अस्ति एव स्थाल्यादेः भूतलकटादेश्च इति स्थाल्यां पचति, भूतले वसति, कटे शेते इत्याद्युपपद्यते। एतदुक्तं भवति कारकाधिकारीयेण एतत्सूत्रेण क्रियान्वय्याधारस्य अधिकरणसंज्ञा विधीयते। क्रिया च धात्वर्थः। साक्षात् क्रियाधारयोः पराभ्यां कर्तृकर्मसंज्ञाभ्याम् आक्रान्तत्वात् इदं सूत्रम् अनवकाशं स्यात् परम्परया धात्वर्थाश्रयस्य अधिकरणसंज्ञाविधानेन चरितार्थम्।[२३]

**नागेशमतम् ।**

नागेशभट्टेनापि समानमेव पन्थाः आश्रितः। तथाहि - "कारके" इत्यधिकारात् क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव। तत्रेप्सितत्वं स्वतन्त्रपदाभ्यां साक्षात् क्रियाधारयोः कर्मकर्तृसंज्ञाभ्यां बाधात् परम्परया तदाश्रयस्य ग्रहणम्, परम्परा च कर्तृकर्मद्वारिकैव" इति।[२४]एवं परमलघुमञ्जूषायामपि निगदितम् – "कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम् " इति।[२५]

फलं व्यापारश्च समवायसम्बन्धेन क्रमशः कर्मणि, कर्तरि च तिष्ठतः। पुनः कर्म तथा कर्ता संयोगसम्बन्धेन आधारे तिष्ठतः। एतादृशक्रियायाः विश्लेषणं कृत्वा तस्याः परम्परासम्बन्धः नाम स्वसमवायिसंयोगसम्बन्धः आधारे अस्तीति दर्शयितुं शक्यते। स्थाल्यामोदनं गृहे पचति इत्यादौ स्थाल्यां तथा गृहम् इति आधारद्वयम्। पचति क्रियायाः फलं विक्लित्तिः, व्यापारश्च अधःसन्तापनादिपाकः । विक्लित्तिरूपं फलम् ओदनरूपे कर्मणि समवायसम्बन्धेन विद्यते। तथा ओदनं विक्लित्तेः आधारोऽपि। अस्या अधिकरणत्वं भवति इति क्रियाध्याहारेण शक्यते। इदानीं चिन्त्यते ओदनं संयोगसम्बन्धेन स्थाल्यामस्ति। तेन ओदनस्य आधारभूता भवति स्थाली। एवं कर्मद्वारा फलस्यापि आधारभूतस्य अधिकरणत्वम्। तेन स्थाल्याः अधिकरणत्वं सिद्धम्। एवं पाकव्यापारस्य आधारः समवायतया कर्ता। कर्तृक्रिययोर्मध्ये एतादृशः सम्बन्धः अस्ति, यः खलु अयुतसिद्धः। इदानीं कर्तुः आधारो भवति गृहम्। द्वयोर्मध्ये संयोगसम्बन्धः। अतः कर्तृद्वारा व्यापारस्य आधारभूतस्य गृहस्याधिकरणत्वं सिद्धम्।

वस्तुतः साक्षात् क्रियाधारस्य कर्तृकर्मसंज्ञया अधिकरणसंज्ञाया बाधो भवतीति कृत्वा परम्परया क्रियाया आधारस्य अधिकरणसंज्ञा । सा च परम्परया क्वचित् संयोगघटिता, क्वचित् समवायघटिता, क्वचिच्च तत्तदन्यतरातिरिक्तविशेषणता सम्बन्धघटिता। तच्च क्रमेण कटे शेते, पटे शोक्ल्यं, द्रव्यादिषु जातिः, घटाभावे पटाभावः इत्यादौ बोध्या। नागेशेन उदाह्रियते –

"यथा स्थाल्यामोदनं गृहे पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली , कर्तृद्वारकव्यापाराधारो गृहमिति" इति।[२६]

तस्मात् कर्तृकर्मद्वारा क्रियाया आधार एव अधिकरणमिति सर्वेषां सम्मतिः।

**विभागः** ।

इदं च अधिकरणं त्रिविधम्। औपश्लेषिकं वैषयिकम् अभिव्यापकं चेति। तथाहि-"औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधरस्त्रिधा।"[२७] इति।

कटे आस्ते, मोक्षे इच्छास्ति, सर्वस्मिन् आत्मास्ति इति उदाहरणानि। वस्तुतः 'मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणम्' इति कैयटोक्त्या उप समीपे श्लेषः उपश्लेषः, तत् कृतः औपश्लेषिकः इत्यर्थः। एतादृशे अर्थे स्वीकृते कटे शेते इत्यादिकम् औपश्लेषिकस्योदाहरणम्। 'इको यणचि'[२८]इत्यादौ एव औपश्लेषिकम् अधिकरणत्वम् इति भाष्यकाराभिप्रेतम्।

अप्राप्तिपूर्वकप्राप्तिरूपसंयोगसमवायातिरिक्तसम्बन्धेन यदधिकरणं तत् वैषयिकम्। अथवा औपश्लेषिकाभिव्यापकादन्यदधिकरणं वैषयिकमधिकरणम् इति। यत्र सर्वावयवावच्छेदेन आधेयस्य सम्बन्धस्तदभिव्यापकम् इति।

एतत् सर्वमालोच्य वक्तुं शक्यते यत् अधिकरणलक्षणे सर्वेषामपि शास्त्रकाराणाम् ऐक्यमत्यमेव। ध्रुतिहेतुरधिकरणमिति न्यायवार्तिककारः। कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वं परम्परया क्रियाश्रयत्वं वा अधिकरणत्वमिति, स च विलक्षणप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष इति च भवानन्दः। द्वितीयातृतीयासप्तमीनाम् आश्रयोऽर्थः। नन्वेवं द्वितीयातृतीयासप्तमीनां पर्यायतापत्तिरिति चेन्न। फलाश्रये द्वितीयायाः व्यापाराश्रये तृतीयायाः, कर्तृकर्माश्रये सप्तम्याश्च विधानात् इति कौण्डभट्टः। मीमांसकानामपि एवमेवाशयः।

एवं च भवानन्दोक्तं लक्षणमत्र समीचीनम्। कारकाधिकारात् क्रियाश्रयत्वं, तादृगाश्रयत्वस्य साक्षादनुपपत्तेः कर्तृसंज्ञया बाधाच्च परम्परारूपमेव तत् ग्राह्यमिति कर्तृकर्मद्वारकाश्रयत्वमेव वाच्यम्। तदुक्तं हरिणापि – "कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।।" इति।

अत्र सप्तम्या अर्थविषयेऽपि प्रायः समानमेव मतं पोषयन्ति सर्वे । वैयाकरणानां मते आश्रयः। तार्किकाणां मते आश्रयत्वम् आधेयत्वं वा। गोकुलनाथमते अधिकरणत्वम् आधेयत्वं वा । शक्तिः कारकमिति पक्षेऽपि वैयाकरणैः आश्रयत्वं सप्तम्या बोध्यते प्रत्ययानां वाचकत्वे, द्योतकत्वे तु सम्बन्धमात्रमेव।

**उल्लेखपञ्जिः**

१. ऋग्वेदः- 1/85/7

२. तत्रैव, 5/83/9

३. तत्रैव, 7/103/5

४. शिशुपालवधम्-1/45

५. पाणिनिसूत्रम्- 1/4/94

६. तदेव, 2/3/9

७. पदमञ्जरी- 1/4/94

८. पाणिनिसूत्रम्- 1/4/45

९. तदेव, 3/3/122

१०. तदेव, 1/4/1

११. विप्रतिषेधे परं कार्यम्(1/4/2) इति नियमेन , निरवकाशसावकाशयोः निरवकाशो बलीयान् इति नियमेन च।

१२. दीक्षितवृत्तिः - 632

१३. कारकचक्रम्, पृष्ठा 182

१४. शब्दशक्तिप्रकाशिका-(कृष्णकान्तीटीकायाम्) पृष्ठा 314

१५. तत्रैव, पृष्ठा 316

१६. व्युत्पत्तिवादः, पृष्ठा 714

१७. पदवाक्यरत्नाकरः, कारकसप्तमीविवरणम् , पृष्ठा 683

१८. पदवाक्यरत्नाकरः, कारकसप्तमीविवरणम् , पृष्ठा 684

१९. विभक्त्यर्थनिर्णयः , पृष्ठा 436-37

२०. वाक्यपदीयम्.-3/7/148

२१. पाणिनिसूत्रम्- 1/4/42

२२. तदेव, 1/4/23

२३. वैयाकरणभूषणसारः, पृष्ठा 176

२४. लघुशब्देन्दुशेखरः- (कारकप्रकरणम्) पृष्ठा 517

२५. परमलघुमञ्जूषा, पृष्ठा183

२६. परमलघुमञ्जूषा, पृष्ठा 183

२७. वैयाकरणसिद्धान्तकौमुदी, पृष्ठा 354

२८. पाणिनिसूत्रम्- 6.1.77

**परिशीलितग्रन्थपञ्जिः**

अमरसिंहः। *अमरकोषः*। सम्पादकः गुरुनाथतर्कविद्यानिधिभट्टाचार्यः। कलिकाता : संस्कृत पुस्तक भाण्डार, १९८८।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः* (प्रकाशादिव्याख्याचतुष्टयोपेता)। सम्पादकः ढुण्ढिराजशास्त्री। वाराणसी : चौखम्बासंस्कृतसंस्थानम्, २००२ (द्वितीयसंस्करणम्)।

खाण्डदेवः। *भाट्टतन्त्ररहस्यम्* । सम्पादकः अ.सुब्रह्मशास्त्री। वाराणसी : वेनारस-हिन्दुविश्वविद्यालयः, १९७०(तृतीयसंस्करणम्)।

गदाधरः। *व्युत्पत्तिवादः (सुनन्दाव्याख्यासहितः),* सम्पादकः ड.सच्चिदानन्दमिश्रः। दिल्ली : भारतीयविद्याप्रकाशनम्, २००१।

गिरिधरः। *विभक्त्यर्थनिर्णयः* । सम्पादकः जीवनमिश्रः। वाराणसी : चौखम्बा संस्कृत सिरीज्, १९०२।

गोकुलनाथः। *पदवाक्यरत्नाकरः(गूढार्थदीपिकासम्वलितः)*। सम्पादकः श्रीनन्दिनाथमिश्रः। वाराणसी : सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९९८।

जगदीशः।*शब्दशक्तिप्रकाशिका*। सम्पादकः ढुण्ढिराजशास्त्री। वाराणसी : काशीसंस्कृतसिरीज-११९, २००२।

जयकृष्णः। *सारमञ्जरी(*सारदीटीकोपेता)। सम्पादकः अशोककुमारवन्द्योपाध्यायः। कोलकाता : सदेश, १४१५ वङ्गाब्दः।

जयादित्य-वामनौ। *काशिका* (न्यास-पदमञ्जरी-भावबोधिनीसहिता)। सम्पादकौ जयशङ्करलालत्रिपाठि-सुधाकरमालवीयौ। वाराणसी : तारा प्रिंटिङ्ग वर्क्स, १९८७।

जैमिनिः। *मीमांसादर्शनम्* (भाष्यवार्त्तिकन्यायसुधाव्याख्यायुतम्)। सम्पादकः महाप्रभुलालगोस्वामी। वाराणसी : ताराप्रिण्टिंग वर्क्स, १९९३।

नागेशः। *परमलघुमञ्जूषा।* सम्पादकः आचार्यलोकमणि-दाहालः। वाराणसी : चौखम्भासंस्कृतप्रतिष्ठानम्, १९९१।

नागेशः। *परमलघुमञ्जूषा*। सम्पादकः जयशंकरलालत्रिपाठी। वाराणसी : कृष्णदास अकादमी, वि.सं. २०६१।

नागेशः। *परमलघुमञ्जूषा*। सम्पादकः वंशीधरमिश्रः। वाराणसी : चौखम्वा विद्याभवन, २००६।

नागेशः। *बृहच्छब्देन्दुशेखरः*। सम्पादकः सीतारामशास्त्री। वाराणसी : वाराणसेय-संस्कृतविश्वविद्यालयः, १८८२।

नागेशः। *लघुशब्देन्दुशेखरः, (अव्ययीभावान्तः)*। सम्पादकः भैरवीमिश्रः। वाराणसी : चौखम्वा संस्कृत सीरिज् आफिस्, १९८३।

पतञ्जलिः। *महाभाष्यम्*। सम्पादकः श्रीभार्गवशास्त्रि-जोशिः। वाराणसी : चौखम्बासंस्कृत-प्रतिष्ठानम्, २००८ (पुनर्मुद्रितम्)।

# कालिदासकाव्येषु लोकोक्तिविचारः

विकाश-सरदारः

**भूमिका** –

इह संस्कृतजगति कालिदासतुल्यः द्वितीयः कविर्नास्ति। आलङ्कारिकेण ध्वनिकारेण महाकवयः इति वक्तुं योग्या विरलतया भवन्तीति प्रतिपाद्य तेष्वपि कालिदास एवाग्रगण्य इति उद्घोषितः। एवं मम्मटेनापि काव्यप्रकाशे प्रथमोल्लासे काव्यप्रयोजनविषये कालिदासनामैव प्रथमतया उल्लिखितम् – **'कालिदासादीनामिव यशः'**[१] इति। एवमन्येषामपि ग्रन्थेषु सर्वत्र कालिदासप्रशंसा बहुधा दृश्यते।

कालिदासः लोकव्यवहारं रचनासु प्रकटयति। लोकव्यवहारः अत्यन्तमुख्यतमः। यः कोऽपि लोके प्रतिवसति तदुपरि लोकस्य प्रभावः अनिवार्यतया प्रवर्तते। कवीनां विषये लोकव्यावहारज्ञानम् अत्यावश्यकम्। 'शक्तिर्निपुणता लोके शास्त्रकाव्याद्यवेक्षणात्'[२] इति। बहु शास्त्रविदपि कविः लोकव्यवहार भावनावशैव काव्यं निर्माणं करोति। सहृदयाः अपि लोकव्यवहारभावनावशः एव काव्यं पठन्ति। लोकव्यवहाररहितं काव्यं सहृदयेषु समादृतं न भवति।

**लोकोक्तिविचारः** –

> यं सर्वशैलाः परिकल्प्य वत्सं
> मेरौ स्थिते दोग्धरि दोहदक्षे।
> भास्वन्ति रत्नानि महौषधींश्च
> पृथूपदिष्टां दुदुहुर्धरित्रीम्।।[३]

पृथुना कृतं पृथिवीदोहनं हरिवंशे श्रीमद्भागवते च स्पष्टं प्रतिपादितम्। एष हिमवतो विशेषवृत्तान्तो दृश्यते। हैमवत्या आभिजात्यं निरूपयति। विश्वव्यापिनो भेदस्य इदम् उदाहरणम्। गुणदोषयोर्विश्वव्यापित्वात्। अत्र गुणबाहुल्ये दृष्टः कोऽपि दोषः न गण्यते इति लोकव्यवहारः।

> त्वत्सम्भावितमात्मानं बहुमन्यामहे वयम्।
> प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः।।[४]

पार्वतीवचसा कन्या याञ्च्यार्थं हिमवन्तं गमयितुं शिवः सप्तर्षीन् सस्मार। ते शिवेन स्मृतत्वादेव आत्मनः बहुमन्यमानाश्शिवम् एवम् ऊचुः –

त्वयाऽस्मासु गौरवप्रदर्शनादेव वयं धन्याः उत्तमानामादरः पुंसां स्वषां गुणेषु विश्वासं द्रढयति। गुणिनाम् अपि उत्तमादरः प्रत्ययः कारकः इति अत्र लोकनयः वर्णितः।

मेघदूते –

> सा संन्यस्ताभरणमबला पेशलं धारयन्ती
> शय्योत्सङ्गे निहितमसकृद् दुःख दुःखेन गात्रम्।
> त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
> प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा।।[५]

यक्षो विरहिण्याः स्वप्रियाया दीनां स्थितिं वर्णयित्वा त्वमपि अश्रुमोक्षणं करिष्यसीति मेघं वदन् तत्र कारणं दर्शयति। यः परदुःखासहिष्णुः स सर्वो जनः प्रायः मृदुहृदयो भवति। अत्र मेघे चेतनधर्मारोपाद् विशेषणद्वयं श्लेषमुखेन अन्वेति। आन्र्द्रान्तरात्मा द्रवान्तश्शरीरः। 'नवजलमयम् अस्रमि'ति व्यस्तं रूपकम्। अतो लोकप्रमाणमूलकोयमर्थान्तरन्यासः आर्द्रान्तरात्मनां सामान्येन मेघवृत्तान्तविशेषसमर्थनात्। अत्र करुणाबुद्धेः स्वभावः लोकविषयः उक्तः।

नारीणां विषये –

> अन्तर्हिते शशिनि सैव कुमुद्वती मे
> दृष्टिं न नन्दयति संस्मरणीयशोभा।
> इष्टप्रवासजनितान्यबलाजनसय
> दुःखानि नूनमतिमात्रसुदुस्सहानि।।[६]

चतुर्थाङ्के वेलोपलक्षणार्थं गुरुणा आदिष्टः कण्वशिष्यः प्रभातां रजनीं दृष्ट्वा शोभाहानीं कुमुद्वतीं वर्णयति। अस्तंगते चन्द्रे इयं कुमुद्वती पूर्ववत् शोभापूर्णा न दृश्यते इष्टविरहो वियोगिनीनां दुस्सहः। अत्र लोके अबलानां दशा विरहकाले कथमस्तीति तटस्थस्य मुनिकुमारस्य वचनात् ज्ञायते इति लोकोक्तिः अत्र प्रदर्शितः।

> अतः परीक्ष्य कर्तव्यं विशेषात्सङ्गतं रहः।
> अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्।।[७]

दुष्यन्ततिरस्कृतां शकुन्तलां रुदन्तीं शार्ङ्गरवः एवमुवाच – एवं स्वयमनुष्ठितं चापलमप्रतिकार्यं सत् कर्तारं दहति। अतः प्रवृत्तौ प्राक् सम्यक् परीक्ष्या कार्या। यदि परीक्षा न कृता मनोगतस्य अज्ञानात् सङ्गतं पीडाकरं भवति। अत्र अनालोचितसम्बन्धः वैरप्रदः इति लोकव्यवहारः अत्र प्रदर्शितः।

कुमारसम्भवे –

> उपमानमभूद्विलासिनां

करणं यत्तव कान्तिमत्तया।
तदिदं गतमीदृशीं दशां
न विदीर्ये कठिनाः खलु स्त्रियः।।[८]

मन्मथः इन्द्राज्ञया शिवतपोविघ्नकरणार्थं शिवतपोवनं प्रविष्टः शिवनेत्राग्नौ भस्मसाद्बभूव। ततश्चिरं मूर्च्छिता रतिः कथञ्चित्प्राप्तचेतना दग्धं मन्मथमनुशोचन्ती एवं विललाप। तत्र विलापेषु प्रवृत्तानि वचांसि कविर्वर्णयति। विलासवतां पुरुषाणां तव शरीरमुपमानमभूत्। एवं सुन्दरशरीरं त्वां हरकोपाग्निः पुरुषाकृतिं भस्मराशिं चकार। तथाविधं त्वां दृष्ट्वापि अहमद्यापि प्राणिमि। यदहं मनस्विनी तव दुरवस्था न दर्शनमात्रेण विदारिता भवेयं न तथा संवृत्तमित्यत्र कारणं दर्शयति 'कठिनाः खलु स्त्रियः' इति। स्त्रियः कठिनाः इति लोकव्यवहारः लोकधर्मश्च अत्र प्रदर्शितः।

आर्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति।
प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता।।[९]

कन्यावरणार्थम् अरुन्धतीसहितान् सप्तर्षीनोषधिप्रस्थं प्रेषयन् अरुन्धती तत्र विशेषतः कृतयत्ना भवेदिति वदन् कारणं दर्शयति। विवाहादिशुभकार्याणि स्त्रीप्रधानानि कृत्यानि। अतस्तेषु स्त्रीणामेव घटनापाटवं भवति। अतोऽरुन्धती तत्र उत्साहयुक्तप्रवर्तनं करोति। वैवाहिकेषु विधिषु स्त्रीणामेव चातुर्यं भवतीति लोकवृत्तवर्णनं प्राप्यते।

नीलकण्ठपरिभुक्तयौवनां
तां विलोक्य जननी समाश्वसत्।
भर्तुवल्लभतया हि मानसीं
मातुरस्यति शुचं वधूजनः।।[१०]

विवाहानन्तरं पार्वतीपरमेश्वरावातृप्तिं रतिं चक्रतुः। पार्वत्यपि परमेश्वरेण बहुधा तोषिता। पार्वती लज्जया संयोगविशेषान् बन्धुभ्यो न कथयामास। तथापि इङ्गितमात्रेण ज्ञानवृत्तान्तं मेना प्रीणितां ज्ञात्वा पूर्वशङ्काऽपनोदात् समाश्वसमाप।

अत्र वल्लभशब्देन प्रेमातिशय सूचितः। वल्लते वल्लयते वा वल्लभः।

अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्।[११]

अत्र मातृसामान्यवृत्तान्तेन मेनावृत्तान्तः विशेषेणसमर्थितः। अत्र मातृणां दुःखं दुहितुः भर्तुवाल्लभ्य लाभेन भवति इति लोकोक्तिः उक्ता कालिदासेन।

असुरयुद्धविधौ विबुधेश्वरे
पशुपतौ वदतीति तमात्मजम्।

गिरिजया मुमुदे सुतविक्रमे

सति न नन्दति का खलु वीरसुः॥[१२]

तारकवधाय परमेश्वरः कुमारमादिदेश। महापराक्रमवद्भिः परिणतवयस्कैः करणीयं रक्षोवधकर्मणि बालो विनियुज्यत इति पार्वती न खिन्ना। प्रत्यत कुमारपराक्रमेण वीरप्रसविनी भविष्यामि इति परं ननन्द।

वीरमाता सुतपराक्रमे परितोषं गच्छति। अत्र पार्वती परितोषः साधारणस्त्रीतुल्यः मातृधर्मरूपः इति लौकिकः प्रतिपादितः।

**उपसंहारः –**

सुन्दरभावव्यञ्जना, उदात्त तथा कोमलचिन्तनं, प्राञ्जलपदविन्यासश्च इति कारणात् कालिदसस्य काव्यानि आधुनिकरुच्यनुकूलानि सन्ति। कालिदासस्य वर्णने लोकोक्तयः चारुतया प्रकटिताः भवन्ति। लोकस्य मनोरमचित्रणं काव्येषु प्राप्यते। लोकविषये कालिदासस्य प्रगाढज्ञानमस्ति। कालिदासः सम्यक् जानाति स्म यत् लोकेषु व्यवहारः किदृशः भवति। सः न केवलं पुरुषाणां विषये अपि तु स्त्रीणां विषये अपि जानाति स्म। अतः निष्कर्षेण इदं वक्तुं शक्यते यत् कालिदासः लौकिकव्यावहारे अत्यधिकश्रद्धां प्रदर्शयामास इति शम्।

**उल्लेखपञ्जिः**

१. काव्यप्रकाशः, 1, पृष्टसंख्या 7
२. मम्मटाचार्यः काव्यप्रकाशः
३. कुमारसम्भवम् – ½
४. तत्रैव – 6/20
५. मेघदूतम्, उत्तरमेघः 30
६. अभिज्ञानशाकुन्तलम्, 4/3
७. अभिज्ञानशाकुन्तलम्, 5/24
८. कुमारसम्भवम् 4/5
९. कुमारसम्भवम् – 6/32
१०. तत्रैव 8/12
११. अमरकोशः 3/3/117
१२. कुमारसम्भवम् 12/59

**परिशीलितग्रन्थपञ्जिः**

*अभिज्ञानशाकुन्तलम्*, कालिदासः, निर्णयसागर् प्रकाशन्, मुम्बाई, 1936.

*अमरकोशः*, अमरसिंहः, चौखाम्बा विद्याभवन्, वाराणसी, 1962.

*ऋतुसंहारम्*, कालिदासः, वाविल्लरामस्वामिशास्त्रि, 1954.

*कुमारसम्भवम्*, मल्लिनाथटीका सहितम्, डॉ. सुधाकर मालवीय।

*विक्रमोर्वशीयम्*, कालिदासः, संस्कृत अकाडमी, उस्मानीय विश्वविद्यालयः, 1966.

*महाकवि कालिदास*, ले. रमाशंकर तिवारी।

*मालविकाग्निमित्रम्*, कालिदासः, मोतीलाल् बेलर्सीदास्, वाराणसी, 1963.

*मेघदूतम्*, कालिदासः, चौखाम्बा संस्कृत संस्थान, वाराणसी, 1934.

# व्याकरणशास्त्रोक्तं वृत्तिस्वरूपम्

गोपीकृष्णन्-रेघुः

**सारसंक्षेपः**

व्याकरणशास्त्रेषु कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः वृत्तयः इति प्रसिद्धाः एव। तत्रादौ वृत्तिविषये परिष्कृतधारणा आवश्यकी इति वृत्तिविषये किञ्चिदुच्यते। तत्रादौ वृत्तेर्लक्षणं विचार्यते। तदा आचार्याणां मतानि उपस्थाप्य विचार्यते। तस्मिन् प्रसङ्गे हरि-कैय्यट-दीक्षत-नागेशप्रभृतीनामाचार्याणां मतानि उल्लिख्यन्ते। ततश्च तस्य भेदानां विषये चर्चा क्रियते। तत्र तस्य द्विविधभेदाः तेषां स्वरूपलक्षणादिकं च विचार्यते। एवं पत्रेऽस्मिन् व्याकरणशास्त्रप्रोक्तस्य वृत्तेः स्वरूपं निरूप्यते।

**कुञ्चिकाशब्दः**

वृत्तिः, समासः, कृत्, तद्धितः, एकशेषः, सनाद्यन्ताः, परार्थाभिधानम्, जहत्स्वार्था, अजहत्स्वार्था, भेदः, संसर्गः, उभयम्।

## ०.भूमिका

व्याकरणशास्त्रेषु कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः वृत्तयः इति प्रसिद्धाः एव। तत्रादौ वृत्तिविषये परिष्कृतधारणा आवश्यकी इति वृत्तिविषये किञ्चिदुच्यते।

## १.० वृत्तेर्लक्षणम्

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुषु वर्तमानाया वृत्तेर्लक्षणं प्रस्तौति भाष्यकारः "परार्थाभिधानं वृत्तिरि"[१] ति। किं नाम परार्थाभिधानमिति विषये तत्तदाचार्यैः भिन्नभिन्नमतानि समुपस्थापितानि। तेषां मतानि अधः प्रस्तूयते।

### १.१ लक्षणार्थः

कैयटः तल्लक्षणमेवं व्याख्याति परस्य[२] शब्दस्य यः अर्थस्तस्याभिधानं शब्दान्तरेण यत्र(समासादौ) सा वृत्तिः। यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थः अभिधीयते इति।

> अबुधान् प्रतिवृत्तिं च वर्तयन्तः प्रकल्पिताम्।
> आहुः परार्थवचने त्यागाभ्युच्चयधर्मताम्[३]।। इति।

इत्यनया कारिकया त्यागाभ्युच्चयधर्मता(जहत्स्वार्थाजहत्स्वार्थात्मिका) वृत्तिः शब्दानित्यत्ववादिनामबुधानां बोधाय कल्पिता इत्येवं तदर्थं प्रतिपादयति भर्तृहरिः।

हेलराजः यः[४] शब्दो यस्मिन्नर्थे शक्तस्ततः अन्यार्थप्रत्यायनसामर्थ्यात् स्वार्थ एव स तस्य तत्र भवति परार्थ इति वदति।

नागेशस्य मते परस्योपसर्जनार्थकस्य राजपुरुष इत्यत्र राजरूपस्य शब्दान्तरेण प्रधानार्थकपुरुषशब्देन अर्थप्रत्यायनं स्वार्थविशेषणत्वेन यद्ग्रहणं सा वृत्तिः[५]। आहोस्वित् परार्थस्य प्रधानार्थस्य पुरुषस्याप्रधानराजादिपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणं सा वृत्तिः[६] इति वा।

ज्ञानेन्द्रसरस्वती तत्वबोधिन्यां प्रत्ययान्तर्भावेन[७] परार्थान्तर्भावेन वा यो विशिष्टः अर्थः स परार्थः, स चाभिधीयते येन तत्परार्थाभिधानमिति अभिप्रैति।

वासुदेवदीक्षितः अभिधानमिति करणे ल्युट्। सामान्ये नपुंसकम्। विग्रहवाक्यावयवपदार्थेभ्यः[८] परः अन्यः योऽयं विशिष्टैकार्थस्तत्प्रतिपादिका वृत्तिः इति चार्थं कल्पयति।

केचित्तु- परशब्दस्तदर्थपरस्तेन युक्तः अर्थः परार्थः। एवञ्च परस्यार्थेन सम्बन्धो यः स्वार्थस्तस्याभिधाभिरुपस्थितिस्तत्करणमिति व्युत्पत्त्या परार्थान्वितस्वार्थस्यैवोपस्थितिरिति फलितार्थः अभ्युपेय इति।

अत्रेदमवधेयं यत् "अथ ये वृत्तिं वर्तयन्त किं त आहुः"[९], "परार्थाभिधानं" वृत्तिः इति भाष्योक्त्या पञ्चानां वृत्तिरिति पूर्वाचार्याणां संज्ञा इहापि आश्रीयते इति तत्त्वबोधिनीकारोक्त्या च लक्षणमिदं नापूर्वमिति अनुगम्यते।

परार्थाभिधानात्मिकाया वृत्तेर्व्याख्यानात् अवगम्यते यच्छब्दानां तत्तदर्थाभिधानात्मिका वाच्यवाचकभावापरपर्यायाख्या या शक्तिर्वाचो युक्त्या सर्वैरपि आचार्यैरङ्गीक्रियते, यया शक्त्या समन्विताः शब्दा लोके तत्तदर्थेषु प्रयुञ्जन्ते स चार्थो भवति तस्य स्वार्थः। अत एव शास्त्रकारैः शब्देनार्थस्य विलक्षणसम्बन्धो वृत्तिपदेनाभिहितः, ततः अन्यार्थप्रत्यायनाय(परोपकाराय) वृत्तिरियं कल्पिता।

### २.० वृत्तिभेदः

परार्थाभिधाने स्वार्थत्यागपूर्विका शब्दानां प्रवृत्तिः, उत स्वार्थरक्षणपूर्विका इति जिज्ञासया वृत्तेर्द्वैविध्यं समायाति- तद्धि जहत्स्वार्था अजहत्स्वार्था च।

### २.१ जहत्स्वार्था

"जहति पदानि[१०] स्वार्थं यस्यां सा जहत्स्वार्था" इति, "जहति स्वानि पदानि[११] यमिति जहत्स्वः, सः अर्थः यस्याः सा जहत्स्वार्था" इति, "जहत्स्वं यस्य[१२] स जहत्स्वः, सः अर्थो यस्यां सा जहत्स्वार्था" इति त्रिधा जहत्स्वार्था इति पदस्य व्युत्पत्तिः सम्भवति। एवं हि व्युत्पत्तिभिः ज्ञायते यत् इयं संज्ञा अन्वर्था। इत्थं च समासादौ उपसर्जनीभूतानां पदानां यदि सर्वात्मना स्वार्थपरित्यागस्तर्हि राजपुरुषमानय इत्यत्र यस्य कस्यचित् पुरुषस्यानयनं प्राप्नोति, औपगवमानय इत्युक्ते यस्य कस्यचित् अपत्यस्य वानयनं सम्भवति। एतस्याः समस्यायाः समाधानाय भाष्यकारेणोक्तं यत्- "जहत्यप्यसौ[१३] स्वार्थं नात्यन्ताय जहति। यः परार्थविरोधी स्वार्थस्तं जहति। न चायमर्थः परार्थविरोधी विशेषणं नाम। तस्मान्न हास्यति इति"। अत एव सिद्धान्तः समायातो यत् अवयवशक्तिसहकृतसमुदायशक्त्या विशिष्टैकार्थीभावात्मिका जहत्स्वार्था वृत्तिर्भवति। एवं च यदि सर्वात्मना परित्यागः स्यात्तर्हि राजकर्मणि नियुक्तस्तक्षा स्वप्राणाधायकान् नैसर्गिकान् हिक्कितश्वसितकण्डूयितादिप्राणिधर्मान् परित्यज्य जीवितुमेव न शक्नोति ततश्च राजकर्मणि कथं प्रवर्तेत। अत एव राजपुरुषौपगवादौ राजोपग्वादेः स्वीयविशेष्यत्वरूपार्थस्य परित्यागः पुरुषापत्यादिपरार्थं प्रति विशेषणत्वात् भवति।

ननु अथैवं सति राज्ञः पुरुष इत्यादिवाक्ये राजपुरुष इत्यादिवृत्तौ च राजादिपदस्य विशेषणतायाः समानस्थितिकत्वात् कस्तावत् विशेष इति जिज्ञासां समाधत्ते कैयटः- "वाक्ये स्वविशेषणसम्बन्धप्रतिपत्त[१४] सामर्थ्याविघातः। वृत्तौ उपसर्जनीभूतेन स्वार्थेन प्रधानार्थस्योपकारात् स्वविशेषणप्रतिपत्तौ सामर्थ्यहानिरि"ति।

एवं हि पांसूदकवदविभागापन्नत्वेनैकोपस्थित्यात्मिका शक्तिः सिध्यति। "जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी[१५]" इत्येवंरूपेण अविभागापन्नत्वेनावयवार्थानुकूलस्य प्रतिकूलस्य वा समुदायार्थस्य कल्पनैव व्यर्था। यतो हि

तत्रावयवार्थाः समुदाये विलीयन्ते, भवति च तेषां शब्दानां विशिष्टेष्वर्थेषु शक्तिग्रहः। तथोक्तं भूषणसारकारेण- "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्[१६]" इति।

एवं राजपुरुषादौ राजादिपदं स्वविशेष्यत्वांशं परित्यजति किन्तु प्रकारत्वमभिसन्दधाति। एवं हि विशेष्यत्वांशस्य त्यागेन जहत्स्वार्थत्वं सिध्यति। एवमपि महाबाहुर्महासुन्दर इत्यादौ समासे विशेषणीभूतमहच्छब्दस्यार्थवत्त्वाभावेन "अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमि"ति न्यायवचनानुसारम् "आन्महतःसमानाधिकरणजातीययोः"[१७] इत्यात्त्वाद्यानापत्तिः। अतो भाष्यकारेण द्वितीयं समाधीयते यत् "अन्वयाद् वा विशेषणं भविष्यति"[१८] इति। एतेन विशेषणीभूतराजादिपदानां विशेष्यत्वरूपस्वार्थपरित्यागे सति स्वातन्त्र्येणार्थप्रत्यायनाभावात् विशेषणत्वस्य भानं तु राजादिपदसंसर्गमात्रेण चम्पकपुटवत् भवति इति आयातम्। परन्तु अन्वयात् विशेषणत्वस्य भाने अपि घृतघटादिषु दृष्टान्तेषु विषमोपन्यासात् मल्लिकापुटचम्पकपुटादिदृष्टान्तकल्पनया प्रकल्प्यप्रकल्पकभावस्य लक्षणामूलकत्वेन सामर्थ्यात्मिकाया हार्द्याया अभिधाया विच्छेदापत्तिः स्यात्। अत आह भाष्यकारः- "अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते"[१९] इति। तथाहि विशेषणीभूतराजादिपदं विशेष्यीभूतपुरुषादिपदञ्च एकीभूयैकार्थीभावात्मिकया शक्त्या तत्त्वमस्यादिवाक्यवदखण्डार्थबोधकं भवति, किन्तु शाब्दबोधे अराजकीयभिन्नो राजसम्बन्धवांश्चायं पुरुष इति भानात् भेदसंसर्गयोर्ध्वननं राजपदसम्बन्धादेव भवति। तेन राजपदस्य स्वशक्यार्थपरित्यागाज्जहत्स्वार्थत्वं सिध्यति। किन्तु एवमपि महाबाहुरित्यादौ महच्छब्दस्य पूर्ववृत्त्यर्थवत्त्वकल्पनया अर्थवत्त्वमादायैव आत्त्वादिकार्यं साधनीयं भवति।

### २.२ अजहत्स्वार्था

नञ्समासे सति अजहत्स्वार्था इति। तेन यत्र पदानि स्वशक्यार्थं न जहति त्यजन्ति सेयमिति लभ्यते।यद्यपि "सर्वे सर्वार्थवाचका" इत्यभियुक्तोक्त्या एकस्मात् अपि शब्दात् सर्वेऽप्यर्था अवगन्तुं शक्याः। तथापि न ते अर्थाः सर्वसाधारणबोधगम्या भवितुं शक्नुवन्ति, अपि तु ते योगिज्ञानगम्या एव। लोके राजपदं राजा गच्छति इत्यादौ, पुरुषपदं पुरुषो गच्छति इत्यादौ च स्वशक्यार्थं बोधयत् भिन्नार्थवाचकत्वेन प्रसिद्धमिति एकपदान्तर्गतसत्त्वे "द्व्येकयोर्द्विवचनैकवचने"[२०] इति शब्दानुशासनात् द्विवचने राजपुरुषौ इति प्राप्नोति। न च तथेष्टम्। एवं दोषमुद्भाव्य समाधत्ते भाष्यकारः यत् "भिक्षुको यथा द्वितीयां भिक्षां समासाद्य पूर्वां भिक्षां न जहाति अपि तु संचयायैव प्रवर्तते"[२१] तथैव प्रसिद्धस्वशक्यार्थादन्यार्थमपि शब्दोऽधिगच्छति इति अजहत्स्वार्था युक्ता एव। परन्तु द्विवचनापत्तिरूपदोषस्तदवस्थ एव। अतस्तदर्थसङ्घातस्यैकार्थ्यान्नावयवसङ्ख्यातः[२२] सुबुत्पत्तिः इति वचनाश्रयणं स्वीकरणीयमेव इति भाष्यकाराभिप्रायः।

अत्रेदं विचारणीयं यत् ये वाक्यात् वृत्तिं निष्पद्यमानां मन्यन्ते तेषां मते तु राज्ञः पुरुषः इति वाक्यस्य राजपुरुष इति सामासिकरूपं परिवर्तते। एवं हि तेषां मते राजन्पदोत्तरवर्तिषष्ठ्यन्तविभक्तेर्द्विवचनं प्राप्नोति, आहोस्वित्पुरुषपदोत्तरवर्तिप्रथमायाः। तत्र सिद्धान्ते विशेषणीभूतराजपदोत्तरवर्तिविभक्त्या अन्तर्भूतत्वात् राजपुरुषपदोत्तरवर्तिविभक्तेरेव द्वित्वं प्राप्नोति इति निश्चयः।

कैयटेन पक्षत्रयमुपस्थाप्य सामान्यतया विशेषणीभूतपदोत्तरवर्तिविभक्तेरन्तर्भूतत्वं प्रतिपादयता उक्तं यत् "कश्चित् अर्थोऽभिहितोऽपि नान्तर्भूतः। यथा राज्ञ इति षष्ठ्या सम्बन्धोऽभिहितो न कुत्रचित् अन्तर्भावं यातः"[२३] इति।

कश्चित् अन्तर्भूतोऽपि नाभिहितः। यथा राजसख इति तत्पुरुषे राजा सखास्येत्यर्थोऽन्तर्भवति न तु अभिधीयते। तथा कश्चित् अर्थोऽभिहितोऽन्तर्भूतः। यथा पचति इति कर्ता अभिधीयमानो गुणभावादन्तर्भूतो न तु असौ प्रातिपदिकार्थ इति। तत्र सम्बन्धोऽभिहितोऽन्तर्भूतप्रातिपदिकार्थः सम्पन्न इति व्यतिरेकाभावात् प्रथमाद्विवचनं प्राप्नोति।

जहत्स्वार्थास्वीकारे हि राजपदादीनां क्लृप्तशक्त्या अर्थोपस्थितेः सत्त्वात् पृथक् विशिष्टैकार्थीभावात्मिकायाः शक्तेः कल्पनस्यावश्यकतैव न स्यात् किन्तु अजहत्स्वार्थास्वीकारे राजादिपदानां क्लृप्तशक्तित्यागो न करणीयः स्यात्। किन्तु अक्षौहिणीरथन्तरादिशब्देषु शक्त्यार्थस्य बोधायैकार्थीभावात्मिका शक्तिरेव शरणम्।

एवं येषां वृत्त्यात्मकशब्दानां वृत्त्यर्थावबोधकविग्रहात्मके वाक्ये तत्पदार्थप्रतीतिर्जायते तेषां कृते तु विभाषाधिकारबलेन वाक्यात्मकं राज्ञः पुरुष इति, समासात्मकं राजपुरुष इति द्वयमपि रूपं यथेच्छं प्रयोगपथमारोहति तत्र समासात्मके पदे अजहत्स्वार्थावृत्त्या बोधसम्भवे सङ्घातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः इति अपूर्ववचनं पूर्वोक्तद्विवचनत्वापत्तिवारणायानिवार्यरूपेण कल्पनीयं भवति।

परन्तु येषां वृत्त्यात्मकपदानां विग्रहो नैव भवितुमर्हति, आहोस्विद् अस्वपदविग्रहो भवति तेषामक्षौहिणी-रथन्तर-केशचूड-निर्वाराणसि-मण्डपादीनां पदार्थावबोधायाजहत्स्वार्था वृत्तिर्निरर्थिकैव।

अत एव समासस्यैकार्थीभावविषयत्वात् तन्मूलिका जहत्स्वार्थावृत्तिरेव तत्राश्रयणीया। जहत्स्वार्थावृत्तिस्वीकारे तु समूहालम्बनात्मकैकार्थीभावरूपविशिष्टशक्त्या बोधोदयात् द्विवचनत्वाद्यापत्तीनामप्यसम्भवत्वं स्यात्।

भाष्यकारोऽपि समासादौ जहत्स्वार्थत्वं युक्तं बाढमिति द्वाभ्यां प्रबलवचनाभ्यां समर्थनं विधाय जहत्स्वार्थामूलकैकार्थीभावसामर्थ्यस्यापि समासे सत्तां स्थापितवान्। तेन न क्वापि सन्देहावसरः।

### २.३ अपरभेदः

वृत्तेरपरे अपि त्रयो भेदाः सन्ति, भेदः, संसर्गः, उभयञ्चेति। तदुक्तम्-

> जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।
> भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः[२४]॥ इति।

### २.३.१ भेदः

तत्र भेदः अन्योन्याभावः। तथा राजपुरुष इत्यादावराजकीयभिन्नपुरुष इति बोधः। यद्यत्र भेदो वाच्यो न स्यात्तदा राजपुरुषः सुन्दरः इत्यस्य यो राजस्वामिकः पुरुषः स देवदत्तस्वामिकोऽपि इति बोधः स्यात्।

### २.३.२ संसर्गः

वस्तुतो राजपुरुषः इत्यनेन प्रथमतो राजसम्बन्धवान् इत्येव शाब्दं भानं भवति। अराजकीयभिन्नः इत्यादिभेदस्तूत्तरकालमुपतिष्ठते। अतः प्रथमोपस्थितरूपान्तरङ्गत्वात् संसर्ग एव वाच्यः, भेदस्तु तात्पर्यग्राहकसापेक्षत्वेन बहिरङ्गत्वान्न वाच्यः, किन्त्वार्थिक एवेति भावः। संसर्गस्य भेदाविनाभावित्वात् संसर्गेण हेतुना भेदोऽनुमीयते इति भावः। तथा चानुमानगम्य एव भेदो न तु शाब्दः।

### २.३.३ उभयम्

अत्र वृत्त्या भेद एवाथवा संसर्ग एव वाच्यः इत्यनयोर्मध्ये एकतरनिश्चायकप्रमाणाभावात् उभयं स्वीकृतम्। तेन भेदः संसर्गश्चेत्युभयं वाच्यमिति आयाति। तथा च अराजकीयभिन्नो राजसम्बन्धवान् चायमिति बोधो भवति।

**३.० उपसंहारः**

एवं व्याकरणशास्त्रदृष्ट्या वृत्तेर्लक्षणं, तस्य भेदाः, तेषामपि लक्षणस्वरूपादिसहितं वृत्तिस्वरूपं भूषणसारादिग्रन्थोक्तं यथामति संक्षेपेण निरूपितमत्र।

**सङ्केतपञ्जिः**

अ. - अष्टाध्यायी

म.भा.- महाभाष्यम्

म.भा.प्र.- महाभाष्यप्रदीपः

म.भा.प्र.उ.- महाभाष्यप्रदीपोद्यतः

वा.प.- वाक्यपदीयम्

वै.ल.म.- वैयाकरणसिद्धान्तलघुमञ्जूषा

वै.भू.सा.- वैयाकरणभूषणसारः

वै.सि.कौ.त.बो.- वैय्याकरणसिद्धान्तकौमुदी तत्त्वबोधिनीटीका

वै.सि.कौ.बा.म.- वैय्याकरणसिद्धान्तकौमुदी बालमनोरमाटीका

**उल्लेखपञ्जिः**

१. म.भा. २/१/१

२. म.भा.प्र. २/१/१

३. वा.प.३/१४/९४

४. वा.प.३/१४/९४, हेलाराजटीकायाम्

५. म.भा.प्र.उ. २/१/१

६. वै.ल.म. वृत्तिविचारे

७. वै.सि.कौ.त.बो. सर्वसमासप्रकरणे

८. वै.सि.कौ.बा.म. सर्वसमासप्रकरणे

९. म.भा. २/१/१

१०. म.भा.प्र. २/१/१

११. म.भा.प्र.उ. २/१/१

१२. वै.भू.सा. परीक्षाटीकायाम्

१३. म.भा. २/१/१

१४. म.भा.प्र. २/१/१

१५. वै.भू.सा. समासशक्तिप्रकरणे

१६. वै.भू.सा. समासशक्तिप्रकरणे

१७. अ. ६/३/४६

१८. म.भा. २/१/१

१९. म.भा. २/१/१

२०. अ. १/४/२२

२१. म.भा. २/१/१

२२. म.भा. २/१/१-४ वार्तिकम्

२३. म.भा.प्र. २/१/१

२४. वै.भू.सा. समासशक्तिनिर्णये ३-कारिका

**परिशीलितग्रन्थपञ्जिः**


कौण्डभट्टः। *वैयाकरणभूषणसारः (आद्याप्रसादमिश्रेण कृतया सावित्रीव्याख्यया सहितः)*। वाराणसी: सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९८८।

त्रिपाठी, विजयप्रसादः। *समासवृत्तिविमर्शः*। वाराणसी: सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९९१।

नागेशभट्टः। *वैयाकरणसिद्धान्तलघुमञ्जूषा (तृतीयभागः)* (श्रीमद्दुर्बलाचार्यविरचितकुञ्जिका-श्रीमद्बालमभट्टविरचितकलाटीकाद्वयेन संवलिता)। सटिप्पणीलेखकसम्पादकाः माधवशास्त्रिभण्डारी-नरहरिशास्त्रपेण्डसेप्रभृतयः। नई दिल्ली: राष्ट्रिय संस्कृत संस्थान, २००६।

भर्तृहरिः। *वाक्यपदीयम् (वृत्तिसमुद्देशः)।* प्रो. हरिनारायणतिवारी (सं.)। वाराणसी: चौखम्बा संस्कृत सीरीज् आफीस्,२०१५।

भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी (सर्वे अपि भागाः)*, (वासुदेशदीक्षितप्रणीतया बालमनोरमाख्यव्याख्यया ज्ञानेन्द्रसरस्वतीविरचितया तत्त्वबोधिन्याख्यया च सनाथिता। सम्पादकौ गिरिधरशर्मा, परमेश्वरानन्दशर्मा। नई दिल्ली: मोतीलाल बनारसीदास, २०१०।

रामानुजताताचार्यः। *शाब्दबोधमीमांसा ( सुबर्थविचारात्मकः तृतीयो भागः)*। पण्डिचेरि: इन्स्टिटिउट फ्रान्चाइस डे पोन्डिचेरि, राष्ट्रिय संस्कृत संस्थान, २००६।

# न्यायसम्मतसंशयपदार्थव्याख्याने भाष्यकारवृत्तिकारयोर्मतसमीक्षणम्

दीपक-गडाइः

**सारसंक्षेपः**

अत्र 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति सूत्रस्य व्याख्यानावसरे भाष्यकारेण विमर्शपदं न तथा विशेषतया चर्चितम्। किन्तु सूत्रस्थविमर्शपदं विशेषतात्पर्यमावहति। अत एव वृत्तिकारेण विमर्शपदं विशेषतया व्याख्यातम्। तथाहि मृश्-धातोः भावार्थे घञा निष्पन्नस्य मर्श-पदस्यार्थो हि ज्ञानम्, तेन वि-इत्युपसर्गपूर्वकमर्शपदस्य विमर्श-पदस्य वा अर्थो हि विरुद्धं विपरीतं वा ज्ञानम् । 'विरुद्धं' 'विपरीतं' वा इति पदेनैव ज्ञायते यत् नानाविरुद्धधर्मविषयकज्ञानं हि संशयः । अन्यथा एकधर्मविषयकज्ञाने तु विरुद्धपदस्य प्रयोगो न भवति । अत एव 'नानाविरुद्धधर्मप्रकारकज्ञानं संशयः' इत्येव संशयलक्षणम् । पदार्थस्य सामान्यलक्षणकीर्तितानन्तरमेव विशेषलक्षणं प्रदातव्यम्। किञ्च संशयस्य सामान्यस्वरूपज्ञातत्वात् जिज्ञासा भवति- संशयः कतिविधः, किं च तेषां लक्षणमिति ? अस्याः जिज्ञासायाः समुचितमुत्तरं तु भाष्यकारेण तथा वृत्तिकारेण प्रदत्तम्। किन्तु तयोः व्याख्याने किञ्चित् भिन्नता अपि दृश्यते, अपि च, वृत्तिकारेण तु संशयस्य प्रकाराः तेषाञ्च लक्षणं व्याख्यापितं किन्तु तेन उदाहरणं न प्रदर्शितम्। किन्तु भाष्यकारेण संशयस्य प्रकारास्तेषाञ्च लक्षणम् उदाहरणयोगेन व्याख्यापितमिति भेदः। तथाहि उभयमतेऽपि संशयस्य पञ्चप्रकाराः प्रदर्शिताः। किञ्च एते प्रकाराः कारणमुखेन वर्णिताः। अत एवोक्तं विश्वनाथेन- '' तत्र कारणमुखेन विशेषलक्षणानि...''[१] इति। भाष्यकारेणापि कारणमुखेन संशयस्य पञ्च प्रकाराः वर्णिताः, किन्तु तेन न हि भाष्ये स्पष्टमुल्लिखितं यत् एते संशयस्य प्रकाराः कारणमुखेन उल्लिखिताः इति। किन्तु भाष्यवचनं विश्लिष्य वृत्तिकारवत् तदेव प्राप्यते इति। ततश्च संशयपदार्थस्य पञ्चप्रकाराः भाष्यकारदिशा तथा वृत्तिकारदिशा वर्णिताः। वर्णने भाष्यकारवृत्तिकारयोर्मतभेदोऽपि दर्शितः।

**कुञ्चिकाशब्दः**

संशयः, विरुद्धम्, विपरीतम्, नानाविरुद्धधर्मप्रकारकज्ञानम्, विमर्शः ।

'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः'[२] इति न्यायदर्शने संशयपदार्थलक्षणसूत्रम्। प्रस्तुतसूत्रे 'संशयः' इति पदेन लक्ष्यनिर्देशः कृतः। इदानीं प्रश्नः तल्लक्ष्यपदस्य नाम संशयपदस्य लक्षणं किम् ? प्रश्नस्यास्योत्तरं तु प्रस्तुतसूत्रमेव। अर्थात् प्रस्तुतसूत्रेण संशयस्य लक्षणं कृतं महर्षिणा गौतमेन। किन्तु प्रस्तुतसूत्रे लक्ष्यपदं व्यतिरिच्य अवशिष्टपदैः लक्षणं सूचितम्। तत्र सूत्रस्थितपदेषु 'विमर्शः' इति पदेन संशयस्य सामान्यलक्षणं तथा अवशिष्टपदैः लक्षणं सूचितम्। नियमस्तु 'पदार्थस्य सामान्यज्ञानं विना विशेषज्ञानमसम्भवम्' इति। अतो वृत्तिकारेण विश्वनाथेन आदौ संशयस्य सामान्यलक्षणघटकं 'विमर्शः' इति पदं व्याख्यापितम्। किन्तु भाष्यकारेण आदौ तथा पृथक्तया 'विमर्शः' इति पदं न व्याख्यापितम्। किञ्च, एतद्वक्तुं शक्यते यत् भाष्यकारेण सामान्यलक्षणतया तथा विशेषलक्षणतया इत्येवं न व्याख्या कृता।

अत्र 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति सूत्रस्य व्याख्यानावसरे भाष्यकारेण विमर्शपदं न तथा विशेषतया चर्चितम्। किन्तु सूत्रस्थविमर्शपदं विशेषतात्पर्यमावहति। अत एव वृत्तिकारेण विमर्शपदं विशेषतया व्याख्यातम्। तथाहि सूत्रस्थविमर्शपदेन संशयस्य सामान्यलक्षणमपि द्योतितं भवति। अत्र वि-इत्युपसर्गपूर्वकात् ज्ञानार्थकमृश्-धातोरुत्तरं भावार्थे घञ्प्रत्यये विमर्शपदं निष्पन्नं भवति। अत्र वि-पदस्यार्थो हि विरुद्धः। एतदर्थोऽन्यत्रापि प्रसिद्धम्। यथा 'संवादः' इत्युक्ते यथार्थज्ञानमेव बोधयति तथा 'विसंवादः'

इति पदम् अयथार्थज्ञानं बोधयति। अत्रापि वि-पदं विपरीतार्थे विरुद्धार्थे वा प्रयुक्तम्। तदुक्तं विश्वनाथेन- " विमर्श इत्यत्र विशब्दो विरोधार्थः, मृशिर्ज्ञानार्थः..."[३] इति।

तथाहि मृश्-धातोः भावार्थे घञा निष्पन्नस्य मर्श-पदस्यार्थो हि ज्ञानम्, तेन वि-इत्युपसर्गपूर्वकमर्शपदस्य विमर्श-पदस्य वा अर्थो हि विरुद्धं विपरीतं वा ज्ञानम्। 'विरुद्धं' 'विपरीतं' वा इति पदेनैव ज्ञायते यत् नानाविरुद्धधर्मविषयकज्ञानं हि संशयः। अन्यथा एकधर्मविषयकज्ञाने तु विरुद्धपदस्य प्रयोगो न भवति। अत एव 'नानाविरुद्धधर्मप्रकारकज्ञानं संशयः' इत्येव संशयलक्षणम्।

किञ्चात्रावधेयं यत् नानाविरुद्धविषयकज्ञाने सत्येव संशयो न भवतीति तु न। यतो हि कस्यापि पुरुषस्य 'घटोऽनित्यः', 'आत्मा नित्यः' इत्येवं नित्यत्वप्रकारके तथा अनित्यत्वप्रकारके ज्ञाने सत्येव तत्पुरुषस्य संशयो न भवति। एतज्ज्ञानद्वयं तु निश्चयात्मकमेव। अत एव वक्तव्यं यत् 'एकस्मिन् धर्मिणि नानाविरुद्धप्रकारकज्ञानमेव संशयः' इति। अत 'आत्मा नित्यः अनित्यश्च' इत्येवम् एकस्मिन्नेव आत्मनामकधर्मिणि यत् नित्यत्वानित्यत्वप्रकारकज्ञानं तत् संशयात्मकमेव। अत एव विश्वनाथेन वृत्तौ निगदितं - '...एकस्मिन् धर्मिणीति पूरणीयम्।'[४] इति।

अत एव संशयस्य कोटिद्वयं प्रसिद्धम्। एको हि भावकोटिः अपरश्चाभावकोटिः। अत एव भावप्रकारकं तदभावप्रकारकं ज्ञानं हि संशयः। यथा आत्मनि (एकस्मिन् धर्मिणि) नित्यत्वप्रकारकं (भावकोटिकम्) नित्यत्वाभावप्रकारकम् (अभावकोटिकम्) इति विरुद्धधर्मविषयकज्ञानसत्त्वात् तज्ज्ञानं हि संशयः। अत एव एकस्मिन् धर्मिणि विरुद्धतया भावाभावप्रकारकं यज्ज्ञानं तद्धि संशयः इति संशयस्य परिनिष्ठलक्षणम्। तदुक्तं विश्वनाथेन *न्यायसूत्रवृत्तौ* - " तेनैकस्मिन् धर्मिणि विरोधेन भावाभावप्रकारज्ञानं संशयः।" [५] इति।

पदार्थस्य सामान्यलक्षणकीर्तितानन्तरमेव विशेषलक्षणं प्रदातव्यम्। किञ्च संशयस्य सामान्यस्वरूपज्ञाततत्वात् जिज्ञासा भवति – संशयः कतिविधः, किं च तेषां लक्षणम् ? इति। अस्याः जिज्ञासायाः समुचितमुत्तरं तु भाष्यकारेण तथा वृत्तिकारेण प्रदत्तम्। किन्तु तयोः व्याख्याने किञ्चित् भिन्नता अपि दृश्यते, अपि च, वृत्तिकारेण तु संशयस्य प्रकाराः तेषाञ्च लक्षणं व्याख्यापितं किन्तु तेन उदाहरणं न प्रदर्शितम्। किन्तु भाष्यकारेण संशयस्य प्रकारास्तेषाञ्च लक्षणम् उदाहरणयोगेन व्याख्यापितमिति भेदः।

तथाहि उभयमतेऽपि संशयस्य पञ्चप्रकाराः प्रदर्शिताः। किञ्च एते प्रकाराः कारणमुखेन वर्णिताः। अत एवोक्तं विश्वनाथेन - " तत्र कारणमुखेन विशेषलक्षणानि..."[६] इति। भाष्यकारेणापि कारणमुखेन संशयस्य पञ्च प्रकाराः वर्णिताः, किन्तु तेन न हि भाष्ये स्पष्टमुल्लिखितं यत् एते संशयस्य प्रकाराः कारणमुखेन उल्लिखिताः इति। किन्तु भाष्यवचनं विश्लिष्य वृत्तिकारवत् तदेव प्राप्यते इति।

महर्षिगौतमस्य सूत्रस्थितं 'समानानेकधर्मोपपत्तेः' इति पदं समासबद्धम्। आदौ द्वन्द्वसमासे 'समानानेकधर्मौ' इत्येवं पदं निष्पन्नं भवति। ततश्च 'तयोः उपपत्तिः, तस्मात्' इत्येवं षष्ठीतत्पुरुषसमासे पञ्चमीविभक्तौ 'समानानेकधर्मोपपत्तेः' इति पदं निष्पन्नं भवति। इदानीं 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमानुसारम् 'उपपत्तिः' इति पदं द्वन्द्वसमासस्य प्रत्येकावयवेन सह अन्वितत्वात् 'समानधर्मोपपत्तेः' इति, 'अनेकधर्मोपपत्तेः' इति पदद्वयं प्राप्यते।

**१.प्रथमप्रकारसंशयः-** तत्र प्रथमप्रकारसंशयो भवति समानधर्मोपपत्तेः। अत्र उत्पत्तिपदस्यार्थः ज्ञानम् इति। समानधर्मो नाम संशयस्य आलम्बनस्वरूपः विरुद्धः यत्कोटिद्वयं, तयोः उभययोः यत्साधारणधर्मः इति। अत एव

विरुद्धकोटिद्वयस्य साधारणधर्मस्य ज्ञानात् प्रथमप्रकारसंशयस्योत्पन्नो भवति। अत एवोक्तं वृत्तिकारेण *न्यायसूत्रवृत्तौ* - '' उत्पत्तिः ज्ञानम्, तथा च समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः।''[७] इति। किन्तु भाष्यकारनये समानधर्मस्य उपपत्तिजन्यः अर्थात् कश्चित् साधारणधर्मविशिष्टधर्मीयज्ञानजन्यः 'विशेषापेक्षः' अर्थात् यस्य पूर्वं विशेषधर्मस्योपलब्धिर्न भवति, किन्तु स्मरणं भवति, एतादृशः विमर्शः प्रथमप्रकारसंशयः इति। तदुक्तं भाष्यकारेण - '' समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति।''[८] इति।

अत्र 'समानधर्मोपपत्तिः' इति पदस्यान्तर्गतं 'समानधर्मः' इति पदं कर्मधारयसमासनिष्पन्नमुत बहुव्रीहिसमासनिष्पन्नम् ? भाष्यमते 'समानः धर्मः समानधर्मः' इत्येवं कर्मधारयसमासनिष्पन्नम्। अतो भाष्यकारेण 'स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन्'[९] इत्येवमुदाहरणवाक्यं प्रदत्तम्। एतेन परपदार्थप्रधानः कर्मधारयसमासः ज्ञातो भवति। किन्तु उद्द्योतकरेण 'समानः धर्मः यस्य ' इत्येवं बहुव्रीहिसमासः प्रदर्शितः। एतेन ज्ञायते यत् समानधर्मविशिष्टधर्मीयज्ञानात् प्रथमप्रकारसंशयः उत्पन्नः भवतीति अर्थोऽपि उद्द्योतकरस्याभिप्रेतः। विश्वनाथमते बहुव्रीहिसमासः एवाभिप्रेतः इति बोध्यते। यतो हि तेन प्रथमप्रकारसंशयस्य फलितलक्षणं कृतं- ''साधारणधर्मवद्धर्मिज्ञानजन्यः''[१०] इति। यदि तन्मते कर्मधारयसमासः स्यात्तदा तेन 'साधारणधर्मज्ञानजन्यः' इति लक्षणं कृतं स्यात्। तदा पुनः धर्मिपर्यन्तानुसरणं न कर्तव्यं स्यादिति। अस्योदाहरणं तु वृत्तिकारेण किमपि न प्रदत्तम्। किन्तु भाष्यकारेणास्योदाहरणं प्रदत्तम्। भाष्यमते सायंकाले स्थाणुपुरुषयोः आरोह-परिणाहौ इति समानधर्मदर्शनात् कस्यचित् पुरुषस्य संशयो जायते यत् 'स्थाणुरयं पुरुषो वा' इति। अत्र स्थाणुर्नाम शाखापल्लवादिशून्यवृक्षविशेषः। आरोहः नाम दैर्घ्यम्, परिणाहश्च नाम विस्तृतिः बोध्यते। ईषदन्ध्यकारे सायंकाले चक्षुरिन्द्रियेण सह स्थाणोः पुरुषस्य वा पदार्थस्य सन्निकर्षवशात् तयोः समानदैर्घ्यं तथा विस्तृतिमवलोक्य तयोः विशेषधर्मस्य ज्ञानं न भूत्वा द्रष्टुः पुरुषस्य सन्देहो जायते यत् पुरतः दृश्यमानः अयं पिण्डः स्थाणुः पुरुषो वा ? इति एष संशयः समानधर्मज्ञानात् जायते, अतोऽयं समानधर्मोपपत्तिजन्यः संशग्र:।

**२.द्वितीयप्रकारसंशयः-** द्वितीयप्रकारसंशयः अनेकधर्मस्य उपपत्तेः ज्ञानाद्वा जायते। अत्रायं प्रश्नः जायते यत् अनेकधर्मपदस्य कोऽर्थः ? एतदुत्तरे वक्तुमलं यत् अनेकधर्मपदस्यार्थः असाधारणधर्मः। तदुक्तं वृत्तिकारेण - ''अनेकधर्मः असाधारणधर्मः, तज्ज्ञानादित्यर्थः।''[११] इति। ननु कथमयमर्थो लभ्यते ? अत्रोच्यते – अनेकस्मात् विशेषः विशेषको व्यावर्तकः धर्मः अनेकधर्मः। अत्र अनेकपदेन सजातीयाः अनेकपदार्थाः बोध्यन्ते। अत एव यो धर्मः स्वयं स्वाश्रयं तत्समानजातीयेभ्यः तदसमानजातीयेभ्यश्च अनेकव्यक्तिभ्यः पृथक्करोति, स धर्मः अनेकधर्मः इत्युच्यते। अत उक्तं भाष्यकारेण - ''अनेकधर्मोपपत्तेरिति। समानजातीयमसमानजातीययं चानेकम्। तस्यानेकस्य धर्मोपपत्तेः – विशेषस्य उभयथा दृष्टत्वात्। समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते।''[१२] इति। किञ्च, एतादृशधर्मः तु असाधारणधर्म एव भवति। यतो हि असाधारणधर्म एव स्वाश्रयं तस्य समानजातीयेभ्यस्तथा असमानजातीयेभ्यः बहुविधपदार्थेभ्यः पृथक्करोति इति। अनेकपदार्थेभ्यः पृथक्त्वात् लक्षणया उक्तधर्मः अनेकधर्म इत्युच्यते। एतत्पक्षे 'समानजातीयमसमानजातीयं चाऽनेकम्' इति एतद्भाष्ये व्याख्यातं यत् अनेकपदार्थः तत्र 'तस्माद्विशेषः' इति वाक्येन अध्याहृतः। अत एतन्मते भाष्यवचने 'तस्माद्विशेषः' इति वाक्यमध्याहृत्य अनेकधर्मपदस्य उक्तार्थः प्राप्यते। मतमिदम् उद्द्योतकरेण *न्यायवार्त्तिके* उपस्थापितं - ''कथं पुनरसाधारणो धर्मोऽनेकधर्म इत्यनेन समासपदेनाभिधीयते ? समानासमानजातीयविशेषकत्वात्, समानजातीयमसमानजातीयं चानेकम्, तस्माद्विशेषो विशेषको धर्मः अनेकस्माद्विशेषोऽनेकधर्म इति तस्य चानेकस्य धर्मो यथास्वं सोऽयमनेकधर्म इति।''[१३] इति।

अनेकधर्मपदस्यार्थः असाधारणधर्मः इति तु *न्यायसूत्रवृत्ता*वपि उल्लिखितं विश्वनाथेन। किन्तु उक्तपदस्य उक्तार्थः कथं लभ्यते इति विषये न चर्चितं वृत्तिकारेण । मन्ये पूर्वाचार्यैः वार्त्तिकादौ तद्व्याख्या कृता इति कृत्वा विश्वनाथेन व्याख्या न कृता इति।

अस्यापि संशयस्य उदाहरणं वृत्तिकारेण *न्यायसूत्रवृत्तौ* न प्रादर्शि परं भाष्यकारेण प्रदर्शितम्। यथा शब्दस्य अनेकधर्मः असाधारणधर्मो वा विभागजन्यत्वम्। यतो हि विभागजन्यत्वमिति धर्मः शब्दं तत्समानजातीयगुणपदार्थेभ्यः तथा असमानजातीयद्रव्यादिपदार्थेभ्यः पृथक्करोति, अतो विभागजन्यत्वमिति धर्मः शब्दस्यासाधारणधर्मः। विभागजन्यत्वं केवलं शब्दात्मकगुणपदार्थे एव तिष्ठति। यथा- वंशद्वयस्य बलपूर्वकतया विभागात् एकस्य विलक्षणशब्दस्योत्पत्तिर्भवति। अयं शब्दश्च यतः आकाशसमवेततया उत्पद्यते अतः उक्तशब्दस्य समवायिकारणं भवति आकाशम्।। किञ्च, यथा वंशद्वयस्य विभागः उत्पन्नः भवति तथैव तद्वंशद्वयस्य आकाशेन सहापि विभागः उत्पन्नः भवति। अत एव अयं विभागः स्वयम् आकाशे समवेतः सन् तदधिकरणस्यैव शब्दरूपकार्यस्य जनको भवति। अत एव तच्छब्दं प्रति उक्तविभागो हि असमवायिकारणम्। अतः शब्दे विभागजन्यत्वं तिष्ठति। विभागजन्यत्वं यथा अन्यरूपादिगुणपदार्थे न तिष्ठति इति कृत्वा शब्दः गुणपदार्थः न वेति संशयो जायते। अपि च, द्रव्यं कर्म चापि विभागजन्यं न भवतीति कृत्वापि शब्दः द्रव्यं कर्म वा इति संशयो जायते। यदि विभागजन्यत्वं कस्यापि द्रव्यादिपदार्थस्य धर्मः स्यात्, तदा शब्दे तद्दृष्टत्वात् शब्दः द्रव्यादिपदार्थेषु कश्चित् इति निर्णेतुं शक्यते। किन्तु वस्तुस्थितिस्तु भिन्न एव। अत एव विभागजन्यत्वधर्मज्ञानात् संशयो भवति यत् शब्दः द्रव्यं, न वा गुणः, न वा कर्म ? इति। अत एव भाष्यकारेण निगदितम् - '' अस्ति च शब्दे विभागजन्यत्वं विशेषः। तस्मिन् द्रव्यं गुणः कर्म वेति सन्देहः, विशेषस्योभयथा दृष्टत्वात्। किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः, आहोस्वित् गुणस्य सत इति, अथ कर्मणः सत इति ? विशेषापेक्षा-अन्यतमस्य व्यवस्थापकं धर्मं नोपलभते इति बुद्धिरिति।''[१४] इति।

**३.तृतीयप्रकारसंशयः-** सूत्रस्थेन 'विप्रतिपत्तिः' इति पदेन तृतीयप्रकारसंशयस्य बोधो जायते। 'विप्रतिपत्तिः' इति पदस्य व्याख्यायां भाष्यकारेण निगदितं - ''व्याहतमेकार्थदर्शनं विप्रतिपत्तिः''[१५] इति। अर्थात् एकस्मिन्नेवार्थे यत् व्याहतदर्शनम् अर्थात् विरुद्धज्ञानम् तद् विप्रतिपत्तिरित्युच्यते। अतः एकस्मिन्नेव पदार्थे विरुद्धनिश्चयात् संशयो जायते। अस्योदाहरणे भाष्यकारेणोक्तम् - '' अस्त्यात्मेत्येकं दर्शनम्, नास्त्यात्मेत्यपरम्।''[१६] इति। अर्थात् यदि कस्यचित् वादिनः निश्चयो भवति 'आत्मा अस्ति' इति तथा च कस्यचित् प्रतिवादिनः निश्चयो भवति 'आत्मा नास्ति' इति तदा तस्मात् संशयो जायते। अत्र एकस्मिन् आत्मपदार्थे अस्तित्वं नास्तित्वञ्च इति विरुद्धधर्मद्वयात् निश्चय एव विप्रतिपत्तिः। किञ्च, अयं सद्भावः असद्भावश्च अर्थात् आत्मनः अस्तित्वं नास्तित्वञ्च एकत्र न सम्भवति, अन्यतरस्य अर्थात् आत्मनः अस्तित्वं नास्तित्वञ्च इत्यस्य कस्यचित् पक्षस्य साधकहेतुरपि नोपलभ्यते, तत्र स्थले अर्थात् यत्रात्मनः अस्तित्वं नास्तित्वञ्च इति एकतरस्य पक्षस्य निश्चयो न भवति, तत्र मध्यस्थपुरुषस्य तत्त्वस्य अनवधारणरूपः संशयः जायते। अत एवोक्तं भाष्यकारेण- '' न च सद्भावासद्भावौ सहैकत्र सम्भवतः, न चान्यतरसाधको हेतुरुपलभ्यते, तत्र तत्त्वानवधारणं संशय इति।''[१७] इति।

किञ्चात्रावधेयं यत् संशयस्य जनकः विरुद्धज्ञानस्य प्रतिपादकं वाक्यं द्वयं न भवति। किन्तु संशयजनकवाक्यम् एकमेव भवति- भावाभावकोटिकम् 'आत्मा नित्यो न वा' इति एकवाक्यमेव परवर्तिकाले नैयायिकाः विप्रतिपत्तिवाक्यरूपेण स्वीकृतवन्तः। अस्मिन्नेव तात्पर्ये वृत्तिकारेण विश्वनाथन्यायपञ्चाननेन *न्यायसूत्रवृत्तौ* भणितं- ''विप्रतिपत्तिः विरुद्धकोटिद्वयोपस्थापकः शब्दः तस्मादित्यर्थः।''[१८] इति। अत्र 'शब्दः' इति पदोल्लेखेन वादिप्रतिवादिनोः

विरुद्धज्ञानस्य संशयजनकत्वं वारितं भवति। तथा च, 'आत्मा अनित्यः' इति विरुद्धज्ञानप्रतिपादके पृथक् पृथक् वाक्यद्वये विप्रतिपत्तिपदार्थस्य लक्षणं वारितम्। यतो हि तद् वाक्यद्वयं प्रत्येकम् एकैकस्य कोटेः उपस्थापकं भवति, किन्तु युगपत् विरुद्धकोटिद्वयस्य उपस्थापकं न भवति।

एवञ्च दृश्यते यत् विप्रतिपत्तिपदस्यार्थविषये भाष्यकारवृत्तिकारयोः मतविरोधः प्रतीयते। अत्रैकं समाधानं हि - 'व्याहतमेकार्थदर्शनं विप्रतिपत्तिः' इति भाष्यकारस्य वाक्यान्तर्गतदर्शनपदस्य अर्थः ज्ञानं न कृत्वा, तत्पदं करणवाच्ये ल्युट्प्रत्यये निष्पन्नत्वेन गृहीत्वा तस्यानुपपत्तिर्न भवति। अर्थात् भाववाच्ये दर्शनपदस्यार्थः भवति ज्ञानम्। किन्तु 'दृश्यते ज्ञायते अनेन' इति विग्रहे करणवाच्ये दर्शनपदस्यार्थः गृह्यते चेत् तदा दर्शनपदस्यार्थः स्यात् ज्ञानजनकवाक्यमिति। अतस्तेन विरोधावकाशः स्यात् इति ध्येयम्।

**४.चतुर्थप्रकारसंशयः**- सूत्रस्थेन 'उपलब्ध्यनुपलब्ध्यव्यवस्थातः' इति पदेन पुनः संशयस्य प्रकारद्वयमुपवर्णितं भाष्यकारवृत्तिकाराभ्याम्। 'उपलब्धिश्च अनुपलब्धिश्च' इति विग्रहे द्वन्द्वसमासे 'उपलब्ध्यनुपलब्धी' इति पदं निष्पद्यते, ततश्च 'तयोः अव्यवस्था' इति विग्रहे षष्ठीतत्पुरुषसमासे 'उपलब्ध्यनुपलब्ध्यव्यवस्था' इति पदं निष्पन्नं भवति। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमानुसारम् 'अव्यवस्था' इति पदं द्वन्द्वसमासस्य घटकीभूतोभयावयवेन सहान्वयवशात् 'उपलब्ध्यव्यवस्था' तथा 'अनुपलब्ध्यव्यवस्था' इति पदद्वयमुपलभ्यते। अत एव भाष्यकारेण तथा वृत्तिकारेणापि उपलब्ध्यव्यवस्थातः तथा अनुपलब्ध्यव्यवस्थातः संशयः भवतीति वर्णितम्। उपलब्ध्यव्यवस्थातः चतुर्थप्रकारसंशयविषये भाष्यकारेणोक्तम् - '''उपलब्ध्यव्यवस्थातः' खल्वपि सच्चोदकमुपलभ्यते तडागादिषु, मरीचिषु चाऽविद्यमानमुदकमिति, अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते, अथासदिति संशयो भवति।''[१९] इति।

अत्र 'उपलब्धिः' इति पदेन ज्ञानमित्यर्थः बोध्यः। किञ्च, उपलब्धिशब्देन प्रत्यक्षरूपोपलब्धिः बोध्या। 'व्यवस्था' इति शब्दस्यार्थः नियमः इति। तेन 'अव्यवस्था' इति शब्देन अनियमः इत्यर्थः बोध्यते। एवञ्च 'उपलब्ध्यव्यवस्था' इति शब्देन प्रत्यक्षरूपज्ञानस्यानियमः बोध्यः। अत एव प्रत्यक्षस्य अनियमवशात् संशयः उत्पन्नः भवति। भाष्यकारेण अस्य पदस्य विस्तरव्याख्या न प्रदत्ता, न वा व्याख्यानं प्रदत्तम्। तेन हि उदाहरणं सव्याख्यानं प्रदत्तम्। तथाहि भाष्यकारेणोक्तं यत् विद्यमानपदार्थस्य प्रत्यक्षं भवति। यथा सद्रूपेण वर्तमानम् उदकम् तडागादिषु उपलभ्यते प्रत्यक्षगोचरो भवति। तथा अविद्यमानपदार्थस्यापि प्रत्यक्षं भवति। यथा- मरीचिषु सिकतामयमरुस्थलोपरिपतितेषु सूर्यकिरणेषु अविद्यमानमुदकं जलं वा, तस्यापि प्रत्यक्षं भवति। एवं ज्ञानद्वयसत्त्वात् कश्चित् पुरुषो यदा कुत्रापि जलं प्रत्यक्षते, तदा तस्य मनसि संशयो भवति -'इदं पुरोदृश्यमानं सलिलं सदुत असदि'ति। यतो हि पूर्वं तस्य ज्ञानं विद्यते यत् सत्पदार्थस्यापि दर्शनं भवति, तथा असत्पदार्थस्यापि दर्शनं भवति। अतः कश्चित् प्रतीयमाने जलादौ सत्त्वासत्त्वयोः व्यावस्थापकस्य प्रमाणस्यानुपलब्धौ सत्त्वासत्त्वयोरन्यतरस्य निश्चयासम्भवात् संशयो जायते किमिदं प्रतीयमानं वस्तु सदिति किं वाऽसदिति। तदनन्तरं सत्त्वासत्त्वयोरन्यतरस्य व्यवस्थापकप्रमाणसाहाय्यात् सत्त्वं वा असत्त्वं वा निश्चीयते, तेन संशयो निवर्तते इति ध्येयम्। वृत्तिकारेण तु अस्य संशयस्योदाहरणं न प्रदत्तम्। तेन हि 'उपलब्ध्यव्यवस्थातः' इति संशयविषये निगदितं - ''उपलब्धेः ज्ञानस्य, ... याऽव्यवस्था सद्विषयत्वानिर्धारणम्, प्रामाण्यसंशय इति फलितोऽर्थः।''[२०] इति। अर्थात् उलब्धेः ज्ञानस्य यद् अव्यवस्था अर्थात् सद्विषयत्वस्य अनिर्धारणम्, तस्मात् संशयो जायते इति। वृत्तिकारेण उलब्धिपदेन ज्ञानसामान्यरूपार्थः गृहीतः। अत एव भाष्यमते यथा प्रत्यक्षमूलकमुदाहरणं प्रदर्शितं तथैव वृत्तिकारमते ज्ञानमूलकमुदाहरणं सम्भवं स्यादिति।

**५.पञ्चमप्रकारसंशयः-** अनुपलब्ध्यव्यवस्थातः पञ्चमप्रकारसंशयविषये भाष्यकारेण निगदितम् - '''अनुपलब्ध्यव्यवस्थातः' खल्वपि, सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं निरुद्धं वा, ततः क्वचिदनुलभ्यमाने संशयः, किं सन्नोपलभ्यते ? उताऽसदिति संशयो भवति।''[२१] इति। तथाहि 'न उपलब्धिः' इति विग्रहे नञ्समासे 'अनुपलब्धिः' इति शब्दस्य निष्पन्नत्वात् नञः विरोधार्थतावशात् तत्पदस्यार्थः भवति उपलब्धिविरोधिमत्त्वं भ्रमत्वं वा। 'अव्यवस्था' इत्यनेन संशयः बोध्यते इति तु पूर्वमेव वर्णितम्। अत एव अनुपलब्धेः अव्यवस्था नाम भ्रमसंशयः बोध्यते। यथा कश्चित् सदपि नोपलभ्यते न प्रतीयते यथा अन्तःप्रविष्टं कीलकमूलकमुदकं च। असदपि नोपलभ्यते, यथा अनुत्पन्नं विनष्टं च मूलकीलकोदकादि तथा चाऽसत एवानुपलब्धिर्भवतीति नियमो नास्ति, किन्तु सतोऽप्यावृतस्यानुपलब्धिर्भवतीति एषा अनुपलब्ध्यव्यवस्था, ततश्च कश्चित् अनुपलभ्यमाने अप्रतीयमाने वा सत्त्वासत्त्वयोरन्यतरस्य व्यवस्थापकप्रमाणानुपलब्धौ सत्त्वासत्त्वयोरन्यतरस्य निश्चयाभावात् संशयो जायते यद् 'इदं कीलकमूलं न प्रतीयते, तत् सद्वा असद्वा किं सदप्यावरणादिप्रतिबन्धकान्न प्रतीयते किं वा असत्त्वादेव न प्रतीयते' इति। अर्थात् एवं ज्ञानद्वयसत्त्वात् कस्यचित् पुरुषस्य कस्यचित् पदार्थस्य प्रत्यक्षं न भवति चेत् संशयो भवति यत् विद्यमानपदार्थस्य प्रत्यक्षं न भवति ? उत अविद्यमानपदार्थस्य प्रत्यक्षं न भवति ? इत्येवं संशयः निवर्तते इति ध्येयम्।

किञ्च, भाष्यस्थितवचने 'खल्वपि' इति पदं निपातः, तस्यार्थो हि उदाहरणप्रदर्शनम्। प्राचीनकाले अस्यानेकप्रयोगाः दृश्यन्ते। यथा- '*न्यायकुसुमाञ्जलिः*' इति ग्रन्थस्य पञ्चमस्तवके उदयनाचार्येणोक्तम् - 'आयोजनात् खल्वपि' इति। तत्र प्रकाशटीकाकारेण वर्द्धमानोपाध्यायेन लिखितं- 'खल्वपीति निपातसमुदायः, उदाह्रियते इत्यर्थे वर्तते, न समुच्चयार्थः।' इति।

**संकेतपञ्जिः**

न्या.सू.- न्यायसूत्रम्

न्या.वा.-न्यायवार्त्तिकम्

न्या.भा.-न्यायभाष्यम्

न्या.सू.वृ.-न्यायसूत्रवृत्तिः

न्या.द.-न्यायदर्शनम्

न्या.वा.तात्.-न्यायवार्त्तिकतात्पर्यटीका

पृ.-पृष्ठाङ्कः

**उल्लेखपञ्जिः**

१.न्या.सू.वृ., न्या.द.,पृ-२३६

२. न्या.सू.-१/१/२३

३. न्या.सू.वृ., न्या.द.,पृ-२३४

४. तदेव, पृ-१३४

५. तदेव, पृ-२३४

६. तदेव, पृ-२३६

७. तत्रैव

८. न्या.भा.,न्या.द.,पृ-२३४

९. तत्रैव

१०. न्या.सू.वृ., न्या.द.,पृ-२३७

११. तदेव, पृ-२३६-२२३७

१२. न्या.भा.,न्या.द.,पृ-२४०-२४४

१३. न्या.वा.,न्या.द.,पृ-२४०-२४१

१४. न्या.भा.,न्या.द.,पृ-२४४-२४९

१५. तदेव, पृ-२४९

१६. तत्रैव

१७. न्या.भा.,न्या.द., पृ-२४९

१८. न्या.सू.वृ.,न्या.द., पृ-२३८

१९. न्या.भा.,न्या.द., पृ-२४९

२०. न्या.सू.वृ.,न्या.द., पृ-२४०

२१. न्या.भा.,न्या.द., पृ-२४९-२५०

**परिशीलितग्रन्थपञ्जिः**

अन्नंभट्टः। *तर्कसंग्रहः* (सटीकः अध्यापनासहितश्च) । सम्पा. नारायणचन्द्रगोस्वामी। कोलकाता: संस्कृतपुस्तकभाण्डारः, १४१३ (बङ्गाब्दः)।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः* (हरिहरसंस्कृतटीकया शंकरमिश्रकृताऽऽमोदटीकया च सहिता) । सम्पा.प्रो.हरेरामत्रिपाठी। नवदेहली: राष्ट्रीयसंस्कृतसंस्थानम्, २००९।

उद्योतकरभारद्वाजः। *न्यायभाष्यवार्तिकम्* । सम्पा० अनन्तलालठाकुरः। नवदेहली: इण्डियन्-काउनसिल्-आफ्-फिलोसफिकाल्-रिसर्च्, १९९७।

गौतमः। *न्यायसूत्रम्* (वात्स्यायनभाष्यसहितम् उद्योतकरवार्तिकसहितञ्च) । सम्पा० महामहोपाध्यायगङ्गानाथझा। दिल्ली: मोतीलालवनारसीदासः, १९८४ (पुनर्मुद्रणम्)।

गौतमः। *न्यायदर्शनम्* । अमरेन्द्रमोहनतर्कतीर्थः। नवदेहली: मुन्सीराममनोहरलालपाव्लिशार्स् प्राइभेट् लिमिटेड, १९८५(pdf) ।

गङ्गेशोपाध्यायः। *तत्त्वचिन्तामणिः* (प्रमालक्षण) । सम्पा॰ श्रीविश्वबन्धु भट्टाचार्यः, प्रका॰ स्वामी प्रभानन्दः। कोलकाता: रामकृष्ण मिशन् इन्स्टिटिउट् अव कालचार, २००० ।

गौतमः। *न्याय दर्शन* (प्रथमखण्डः) । सम्पा. फणिभूषणतर्कवागीशः। कोलकाता: पश्चिमबङ्गराज्यपुस्तकपर्षत्,२०१४।

तदेव। द्वितीयखण्डः । सम्पा. फणिभूषणतर्कवागीशः। कोलकाता: पश्चिमबङ्गराज्यपुस्तकपर्षत्,२०१५।

तदेव। तृतीयखण्डः । सम्पा. फणिभूषणतर्कवागीशः। कोलकाता: पश्चिमबङ्गराज्यपुस्तकपर्षत्,२०१७।

तदेव। चतुर्थखण्डः । सम्पा. फणिभूषणतर्कवागीशः। कोलकाता: पश्चिमबङ्गराज्यपुस्तकपर्षत्,२०१५।

तदेव। पञ्चमखण्डः । सम्पा. फणिभूषणतर्कवागीशः। कोलकाता: पश्चिमबङ्गराज्यपुस्तकपर्षत्,२०१५।

वाचस्पतिः। तात्पर्यटीका। सम्पा.श्रीराजेश्वरशास्त्री। वाराणसी: चौखम्वा संस्कृत भवन,१९७८।

# *आत्मतत्त्वविवेक-न्यायकुसुमाञ्जलिग्रन्थद्वये* अनुपलब्धिवादखण्डनेनात्मस्थापनम्

देवश्री-खाँडा

**सारसंक्षेपः**

मोक्ष एव जीवनस्य मूलमन्त्रम्। मोक्षप्राप्तये आत्मस्वरूपमवश्यमेव ज्ञातव्यम्। परमपुरुषार्थमोक्षस्य साक्षात्कारणरूपात्मज्ञानलाभार्थमात्मविषयकमालोचनमुदयनाचार्यविरचिते *आत्मतत्त्वविवेक-न्यायकुसुमाञ्जलि*ग्रन्थद्वये दृश्यते। ग्रन्थनिष्ठतत्त्वस्य प्रतिपादनाय परपक्षखण्डनपूर्वकं सपक्षस्थापनमवश्यम्भावी। साधकप्रमाणवद्बाधकप्रमाणज्ञानमपि यथार्थरूपेणापेक्षते। यतो ह्यनभिप्रेतस्य खण्डनाय तद्विषये सम्यग् ज्ञानमपेक्षते, किञ्च बाधकप्रमाणस्याधिक्येऽप्यभीष्टं न सिद्ध्यति। अतो बाधकप्रमाणखण्डनपूर्वकं सिद्धान्तस्य प्रतिष्ठा भवति। अतो ग्रन्थद्वये अनुपलब्धिवादखण्डनेनात्मस्थापनं लक्षितम्।

**कुञ्चिकाशब्दः**

अनुपलब्धिः, आत्मा, आत्मतत्त्वविवेकः, न्यायकुसुमाञ्जलिः।

उदयनाचार्यविरचितेषु ग्रन्थराजिष्वन्यतमावात्मतत्त्वविषयप्रतिपादकौ ग्रन्थौ वर्तेते *आत्मतत्त्वविवेको न्यायकुसुमाञ्जलि*श्चेति। जीवनस्य प्रधानोद्देश्यं दुःखस्यात्यन्तिकी निवृत्तिः। यतो ह्यात्मविषयकज्ञानं विना मिथ्याज्ञाननिवृत्तिर्न सम्भवति, मिथ्याज्ञाननिवृत्तिमृते आत्यन्तिकदुःखनिवृत्तिर्न सम्भवति, अत आत्मविषयकं सम्यग् ज्ञानमपेक्षते। विषयस्य स्थापनाय यथा साधकं किञ्चिद् दातव्यं तथैव तस्य बाधकस्य खण्डनमपि कर्तव्यं भवति। अतस्तस्यात्मतत्त्वस्य साधकप्रमाणस्थापनं बाधकप्रमाणखण्डनञ्चोभयग्रन्थे प्रतिपादितम्। अनेन मोक्षसाधकः शरीराद्यतिरिक्तात्मा सिद्ध्यते।

## *आत्मतत्त्वविवेक*ग्रन्थे अनुपलब्धिवादखण्डनेनात्मस्थापनम्

अस्मिन् जगति प्रसिद्धवादेष्वन्यतमो भवति बौद्धस्वीकृतानुपलम्भवादः। *आत्मतत्त्वविवेक*ग्रन्थे आचार्येणोदयनेन बौद्धस्वीकृतानुपलम्भवादस्य खण्डनं विधीयते। अस्यानुपलम्भवादस्य वर्णनमात्*मतत्त्वविवेक*ग्रन्थे चतुर्थपरिच्छेदे दरीदृश्यते। बौद्धानामाशयः क्षणभङ्गबाह्यार्थभङ्गवादादिनात्मनोऽभावत्वं न सिद्ध्यतीति सत्यम्, परन्त्वनुपलब्ध्या त्वात्मनोऽभावोऽवश्यं सिद्ध्यति।[१] यथानुपलब्धिवशात् शशविषाणादीनां सत्ता न सिद्ध्यति तद्वदात्मनोऽनुपलब्धिवशात् सत्ता नास्त्येव।

अत्र संशय आगच्छति, इयमनुपलब्धिरेकपुरुषनिष्ठा सर्वपुरुषनिष्ठा वा। सर्वेषामनुपलब्धिरिति वक्तुं न शक्यते, यतो ह्यन्येषां ज्ञानाज्ञानादीनां ज्ञानमन्यैर्नानुभूयते। यदि पुरुषविशेषेणैवानुपलब्धिस्तर्हि व्यभिचारदोषापत्तिः। अर्थाद्व्यक्तिविशेषस्यानुपलब्ध्या वस्तूनामभाव ं स्वीकर्तुं न शक्यते, यतो हीन्द्रियादिदोषकारणादप्युनपलब्धिर्भवितुमर्हति। मतमिदं ग्रन्थकारेण प्रतिपादितं यथा– 'सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः'।[२]

एवं दोषापतिते सति बौद्धैरुच्यते– दृश्यत्वे सति यस्यानुपलब्धिस्तस्याभावः स्वीकृतः।[३] परन्तु एवंस्वीकृतेऽपि दोषप्रसङ्गः। यतो हि बौद्धा आत्मनो दृश्यत्वं नाङ्गीकुर्वन्ति। अतो दृश्यत्वविशेषणमात्मनो नैव दातुं शक्नुवन्ति, दृश्यत्वविशेषणे स्वीकृते सति स्वयमेव तस्यात्मनः सत्ता बौद्धैरङ्गीक्रियेत। तस्य पुनरभावः कथं बौद्धैः स्वीक्रियेत। यदि नैयायिकमतानुसारेण दृश्यत्वविशेषणमिति प्रदीयेत तदपि न समीचीनम्, अनुमानस्य स्वतन्त्रसाधनत्वात्। एवञ्चात्मा यदि दर्शनयोग्यो भवेत्तस्यानुपलब्धिरिति विशेषणं नैव युज्यते। यदि चानुपलब्धस्तर्हि तस्य दृश्यत्वं नैव कथमपि युज्यते। अर्थाद् दृश्यत्वे सत्यनुपलब्धेः इति हेतुः सर्वथाऽसिद्ध एव। वस्तुतः 'आत्मा नास्ति अनुपलब्धेः' इत्यस्मिन्ननुमाने आत्मनः पक्षत्वं यदि साधयेत्तर्ह्यात्मनोऽस्तित्वं सिद्ध्यत्येव, तेन च 'नास्ति' इति साध्यस्य बाधो भवति, यद्यात्मरूपपक्ष एव न सिद्ध्येत्तर्हि पक्षासिद्धत्वादनुमानमेव न सिद्ध्यतीति। इत्येवंरूपेण बौद्धानामनुपलम्भवादस्य खण्डनञ्चक्रे आचार्येणोदयनेन। तेन च शरीराद्यतिरिक्तात्मनः सत्ता प्रतिस्थाप्यते।

### *न्यायकुसुमाञ्जलि*दृशाऽनुपलब्धिवादखण्डनेनात्मस्थापनम्

*न्यायकुसुमाञ्जलि*ग्रन्थे तृतीयस्तवके निरीश्वरमतस्य खण्डनं वर्तते। *न्यायकुसुमाञ्जलि*ग्रन्थे दृश्यमानेषु पञ्चविप्रतिपत्तिवाक्येष्वन्यतमं विप्रतिपत्तिवाक्यं भवति यथा– 'अनुपलब्धिरभावसाधिका न वेति'। भाट्टमते ईश्वरस्य बाधकप्रमाणसत्त्वाद् ईश्वरसिद्धिर्न भवति। तच्च बाधकं भवत्यनुपलब्धिरिति। अर्थाद्यदीश्वरः स्यात् तर्हि तस्योपलब्धिरवश्यं भवेत्, किन्तु तस्योपलब्धिर्न भवति, अतोऽनुपलब्धिरूपबाधकसत्त्वादीश्वरास्तित्वं नैव स्वीकर्तुं शक्यते। प्रसङ्गेऽस्मिन् ग्रन्थे दृश्यते– 'तथा हि– यदि स्यादुपलभ्येत'।[४] अत्र बोद्धव्यो यद् यदि भाट्टा ईश्वरस्यान्योन्याभावमत्यन्ताभावं वा साधयेयुः तर्हि नैयायिकपक्षसिद्धिर्भवति। यतो हीश्वरस्यान्योन्याभाव ईश्वरभिन्नं सर्वत्र स्वीकर्तव्यः, एवञ्च ईश्वर आकाशादिवद् अवृत्तिपदार्थत्वाद् आकाशाभाववद् ईश्वराभावोऽपि सर्वत्र स्यात्। ईश्वरस्य प्रागाद्यभावन्तु भाट्टा अपि न स्वीकुर्वन्ति। अतो भाट्टानां प्रतिपाद्यविषयो यत्, क्षित्यादिकं यदि सकर्तृकं स्यात्, वेदश्च यदि सकर्तृकः स्यात् तदा तद्वत्तया उपलभ्येत इति।[५] एवञ्चानुपलब्धिः क्षित्यादेर्वेदस्य च सकर्तृकस्य बाधिका। एतन्न समीचीनम्, यद्यनुपलब्धिमात्रं पदार्थस्य बाधकं स्यात् तदा धर्माधर्मादीनामुच्छेदापत्तिरिति। अतो योग्यानुपलब्धिरेव पदार्थस्य बाधिकेति स्वीकर्तव्यम्। तत्र पूर्वपक्षिभिरुच्यते ईश्वरस्यायोग्यत्वे सत्यनुपलब्धिर्यदीश्वरस्य बाधिका न स्यात् तर्हि शशशृङ्गादीनामप्ययोग्यत्वेऽनुपलब्धिर्बाधिका न स्यात्। तत्र खण्डनावसरे उच्यते– 'शृङ्गं योग्यमस्ति, किन्तु शशे शृङ्गस्यानुपलब्धिः योग्यानुपलब्धिरिति'।[६] तत्र पुनः पूर्वपक्षिभिरुच्यते, शशे शृङ्गस्य योग्यानुपलब्धिर्बाधिका भवितुमर्हति। एवञ्चोच्यते, शृङ्गं यथा योग्यतया व्याप्तं तद्वत् चेतनशरीरस्य कर्तृत्वमपि योग्यतोपाधिना व्याप्तम्। तथा च यत्र यत्र शरीरचेतने शरीररूपयोग्योपाधिमत्ता नास्ति तत्र तत्र कर्तृत्वमपि नास्ति। एवञ्चेश्वरे शरीररूपयोग्योपाधिमत्ताभावात् कर्तृत्वमपि नास्ति। कर्तृत्वव्यापकं यत् प्रयोजनाभिसन्धानमर्थात् फलेच्छा तद् नित्यतृप्ते ईश्वरे न सम्भवति। तथा च फलेच्छारूपप्रयोजनाभिसन्धानाभावाद् उपायेच्छाऽपि न सम्भवति, उपायेच्छाभावात् प्रवृत्तिरपि न भवति। एवञ्च प्रवृत्तिर्यत्र न भवति तत्र कर्तृत्वमपि न भवति। तथा च व्यापकाभावे व्याप्यरूपकर्तृत्वस्याभावोऽनुमीयते।[७]

अस्योत्तरत्वेनोच्यते– 'अहं सुखी' 'अहं दुःखी' चेत्यादौ मानसप्रत्यक्षगम्यत्वात् सर्वेषामेव स्वात्मा प्रत्यक्षयोग्योऽस्ति। किन्तु सुषुप्तौ ज्ञानाद्यभावाद् आत्मन उपलब्धिर्न भवति। परन्तु तथापि योग्यानुपब्ध्या तत्काले आत्मनोऽभावो नैव स्वीकर्तुं शक्यते। एवञ्च यदि योग्यानुपलब्ध्या स्वात्मनोऽभावं साधयितुं न शक्येत तर्ह्ययोग्येश्वरस्याभावमनुपलब्ध्या साधयितुं न शक्यते। अत्र प्रश्नोऽवश्यं भवेत् सुषुप्तावात्मनः प्रत्यक्षं कथं न भवति। अस्य समाधानमत्यन्तं

सुमनोज्ञतयोदयनाचार्येण प्रत्यपादि यथा– सामग्र्यभाव एव वस्तुनः अभाव इत्युच्यते।[८] आत्मनः प्रत्यक्षमपि सामग्रीसत्त्वादर्थाद् विशेषगुणसहकारेणैव भवति, नान्यथा। आत्मनो विशेषगुणा ज्ञानेच्छाकृतिद्वेषसुखदुःखानि चेति। 'अहं जानामि', 'अहम् इच्छामि', 'अहं करोमि' चेत्यादौ ज्ञानादिविशिष्टे एव स्वात्मनः प्रत्यक्षं भवति न तु केवलम् 'अहम्' इत्यनेन। यथा घटस्य प्रत्यक्षयोग्यत्वेऽप्यालोकादिसहकारिकारणाभावात् तस्योपलब्धिर्न भवति तद्वद् आत्मनः प्रत्यक्षयोग्यत्वेऽपि ज्ञानादिसहकारिकारणादेव प्रत्यक्षं भवति, सुषुप्तौ ज्ञानाद्यभावाद् आत्मनः प्रत्यक्षं न भवति। अत्र पुनः प्रश्नोऽयमवश्यमागच्छेत् सुषुप्तौ ज्ञानादीनि किमर्थं नोत्पद्यन्त इति। अस्योत्तरञ्चोच्यते– 'मनसोऽतीन्द्रियप्रत्यासन्नतयाऽजननात् तत् प्रत्यासत्तौ च पश्चाज्जननात्'।[९] अर्थाद् मनसा साकं बहिरिन्द्रियस्य यदा संयोगो भवति तदैव ज्ञानमुत्पद्यते। परन्तु सुषुप्तौ मनसा साकं बहिरिन्द्रियस्य संयोगाभावाज्ज्ञानं नोत्पद्यते। जाग्रत्काले मनसा बहिरिन्द्रियाणां संयोगाज्ज्ञानमुत्पद्यते। सम्प्रति सुषुप्ताविन्द्रियाणां मनसा संयोगाभावाज्ज्ञानाद्यभावाच्च स्वात्मा नोपलभ्यत इत्युक्तम्। परन्तु परस्यात्मा कथं परस्यायोग्यः इति प्रश्नोऽयमवश्यं भवति। अस्योत्तरत्वेनोदयनाचार्यो वक्ति– 'यद्धि मनो यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाकृष्टानि तानि तस्यैवेति नियमः' इति।[१०] अर्थात् केन मनसा कस्यात्मनो ज्ञानं भवतीत्यस्मिन्विषये स्वस्वकर्मार्जितादृष्टमेव नियामकम्। यन्मनो यस्यादृष्टेनाकृष्टं भवति तदीयसाक्षात्कारस्य जनकं भवति। एवञ्च शरीरस्य इन्द्रियस्य च विषयेऽपि एवं कल्पितव्यम्। अर्थाद् यच्छरीरं यस्यादृष्टेनाकृष्टं भवति तच्छरीरावच्छेदेनैव तदीयज्ञानकारणं भवति। एवञ्च यदिन्द्रियं यस्यादृष्टेनाकृष्टं तदवच्छेदेन तदीयज्ञानकारणं भवतीति बोद्धव्यम्। अत एव प्रथमस्तवके चतुर्थकारिकायामुच्यत उदयनाचार्येण– 'प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः'।[११]

एवंरूपेण परस्यात्मविषये योग्यानुपलब्धिर्नास्ति। एवञ्चायोग्यानुपलब्धिर्वस्तुनो बाधकमर्थादभावसाधकं न भवतीति। अत एवोच्यते 'न हि शशशृङ्गमयोग्यनुपलब्ध्या कश्चिन्निषेधति। न च प्रकृते योग्यानुपलब्धिं कश्चिन्मन्यते'।[१२] अर्थाद् अयोग्यानुपलब्ध्या शशशृङ्गस्याभावो न साध्यते कैश्चित्। एवं परमात्मापि योग्यानुपलब्धिर्नास्ति, अतोऽयोग्यानुपलब्ध्या परमात्मनोऽभावं साधयितुं न शक्यते। यद्ययोग्यानुपलब्धिर्बाधिका न स्यात्तर्हि शशशृङ्गस्य सिद्धिरापत्तिस्स्यात्। बाधकाभावे एव वस्तूनां सिद्धिरिति नास्ति, बाधकप्रमाणाभावे साधकप्रमाणसद्भावे वस्तूनां सिद्धिरिति। शशशृङ्गमित्यादिवस्तु कदापि प्रत्यक्षगोचरीभूतं न भवति, तच्च सर्वथाऽयोग्यम्। अयोग्यस्यानुपलब्धिर्नैव स्वीकर्तुं शक्यते। प्रसङ्गेऽस्मिन् हरिदासीटीकायामुच्यते– 'शृङ्गन्तु योग्यमेव तथा च कुतः प्रतिबन्धिः, अयोग्यन्तु शशशृङ्गं न बाध्यते किन्तु साधकाभाव एव तत्र।[१३] वस्तुतः शशशृङ्गः प्रभृत्ययोग्यविषयाणां प्रतिषेधः सम्भवति न वेति प्रश्नस्य समाधानं *न्यायकुसुमाञ्जलौ* तृतीयस्तवके तृतीयकारिकायां प्रदीयते, तथा चोच्यते–

> दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता।
> न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने॥[१४]

अर्थाद् अयोग्यशशशृङ्गप्रभृतीनां प्रतिषेधो नैव सम्भवति। शशशृङ्गस्योपलब्धिं न कश्चन कृतवान्, तच्च सर्वथाऽनुपलब्धम्। पदार्थस्योपलब्ध्यर्थं यत्सामाग्र्यपेक्षते तद्दोषग्रस्तं भवति चेत् पदार्थस्य भ्रमात्मकज्ञानमुत्पद्येत। अभावस्य प्रतियोगिभिन्नकारणानां तथा प्रतियोगिजन्येन्द्रियार्थसन्निकर्षभिन्नकारणानामुपस्थितिर्योग्यता। उच्यते च– 'तदितरसामग्रीसाकल्यं हि तत्'।[१५] शशशृङ्गाद्यलीकवस्तूनामप्युपलब्धिसामग्र्याः दोषनिष्ठत्वाद् अनुपलब्धिज्ञानमपि भ्रमात्मकम्। एवञ्चात्र प्रश्नोऽवश्यं स्यात् 'शशशृङ्गं नास्ति' इति वाक्यस्यार्थबोधः कथं स्यात्। तदोदयनाचार्येण कथ्यते– 'शशे अधिकरणे विषाणाभावोऽस्ति'।[१६] तत्र शशशृङ्गं निषेधस्य प्रतियोगी न भवति, शशे अधिकरणे

शृङ्गस्य अभाव एव प्रतिषेधवाक्यस्य प्रतिपाद्यत्वात् शशे प्रतियोगित्वं नास्ति, अपि तु शृङ्गमेव प्रतियोगी। नैयायिका वैशेषिकाश्चालीकप्रतियोगिकस्य प्रतिषेधं नैव स्वीकुर्वन्ति। प्रतियोगी यद्यलीकं स्यात् तर्हि तस्याभावोऽप्यलीक एव। तथा च तस्यालीकाश्रयस्य प्रत्यक्षमपि न सम्भवेत्, अनुमानमपि न सम्भवेत्। अत 'ईश्वरः न कर्ता कर्तृत्वव्यापकस्वार्थाभिसन्धानरहितत्वात्' इत्यस्मिन्ननुमाने स्वार्थाभिसन्धाना-भावेन पक्षत्वेनेश्वरे कर्तृत्वाभावसाधनं न सम्भवति। एवञ्च प्रकृतानुमाने पक्षस्याप्रसिद्धत्वाद् अनुमानमिदमाश्रयासिद्धिदोषेण ग्रस्तम्। यदीश्वरोऽलीकः स्यात् तर्हि तत्राभावसाधनस्य प्रयोजनमेव नास्ति। यतो ह्यलीकोऽभावस्याधिकरणं नैव भवितुमर्हति। अतोऽसत्ख्यातिवादिनोऽसदीश्वरस्य मिथ्याभासमवलम्ब्य तस्याश्रयस्य कर्तृत्वाभावं साधयितुमिच्छन्ति, तन्न यौक्तिकम्। यद् आभासप्रतिपन्नं तन्निषेधस्याधिकरणं भवितुं नार्हति। एवञ्च *न्यायकुसुमाञ्जलौ* तृतीयस्तवके अस्मिन्प्रसङ्गे उच्यते–

> व्यावर्त्ताभाववत्तैव भाविकी हि विशेष्यता।
> अभावविरहात्मत्वं वस्तुनः प्रतियोगिता॥[१७]

तत्र 'व्यावर्त्त्यः' इत्यस्यार्थः प्रतियोगी। प्रसङ्गेऽस्मिन् प्रकाशटीकायामुच्यते–'व्यावर्त्त्येति। व्यावर्त्त्यः= प्रतियोगी, तदभाववत्ता भाविकी पारमार्थिकी विशेष्यता आश्रयता, वस्तुनः प्रामाणिकस्य, स्वाभावविरहरूपत्वं च प्रतियोगित्वम्'।[१८] अर्थाद् यद् अलीकं तदभावस्य आश्रयं भवितुं नार्हति। एवञ्च 'ईश्वरो नास्ति' इति असतद्रूपेणालीकत्वेन वेश्वरं प्रतियोगिनं स्वीकृत्याभावं साधयितुं न शक्यते। अभावस्याभावात्मकं यद् भावप्रतियोगी तद् वस्त्वेव भवितुमर्हति न त्वलीकमिति। एवंरूपेणोदयनाचार्येणाभावस्यालीकानुयोगिताऽलीकप्रतियोगिता चोभयस्य खण्डनमकारि। तेन चाऽनुपब्धिखण्डनेनेश्वरस्य सत्ता प्रतिस्थाप्यते।

बौद्धसम्मतानुपलब्धिवादे स्वीकृते शरीराद्यतिरिक्तात्मसत्ता न सिद्ध्यति। अत उभयग्रन्थे अनुपलब्धिवादखण्डनेन देहातिरिक्तात्मसत्ता स्थापिताऽऽचार्येण।

**उल्लेखपञ्जिः**

१. आत्मतत्त्वविवेकः, सम्पा. विन्ध्येश्वरीप्रसादद्विवेदी लक्षणशास्त्रिद्राविडश्च, पृ.– ७३९।

२. तत्रैव।

३. 'दृश्यत्वविशेषणान्नैवमिति'।– तत्रैव।

४. न्यायकुसुमाञ्जलिः, सम्पा. श्रीमोहनभट्टाचार्यः, पृ.– २१२।

५. 'क्षित्यादिकं यदि ईश्वरकर्तृकं स्यात् तदा तद्वत्तया उपलभ्यते'।– व्याख्याविवृतिः, न्यायकुसुमाञ्जलिः, सम्पा. चन्दनभट्टाचार्यः, पृ.– १०२।

६. न्यायकुसुमाञ्जलिः, सम्पा. पादपद्मोपाध्यायः ढुण्ढिराजशास्त्री च, पृ.– ३३१।

७. 'तथा च फलेच्छाजन्य उपायेच्छा तज्जन्या प्रवृत्तिरिति परम्परया फलेच्छाजन्यायाः प्रवृत्तेः व्यापकत्वं फलेच्छायामिति व्यापकीभूतफलेच्छाभावात् कर्तृत्वाभावसिद्धिः'।– व्याख्याविवृतिः, न्यायकुसुमाञ्जलिः, सम्पा. चन्दनभट्टाचार्यः, पृ.– १०३।

८. 'कस्यापराधेन पुनर्योग्योऽप्यात्मा तदानीं नोपलभ्यते? सामग्रीवैगुण्यात्'।– न्यायकुसुमाञ्जलिः, सम्पा. पादपद्मोपाध्यायः ढुण्ढिराजशास्त्री च, पृ.– ३१३।

९. तदेव, पृ.– ३२५।

१०. तत्रैव।

११. न्यायकुसुमाञ्जलिः, सम्पा. श्रीमोहनभट्टाचार्यः, १/४, पृ.– १२।

१२. न्यायकुसुमाञ्जलिः, सम्पा. पादपद्मोपाध्यायः ढुण्ढिराजशास्त्री च, पृ.– ३२५।

१३. हरिदासी, न्यायकुसुमाञ्जलिः, सम्पा. चन्दनभट्टाचार्यः, पृ.– १०१।

१४. न्यायकुसुमाञ्जलिः, सम्पा. पादपद्मोपाध्यायः ढुण्ढिराजशास्त्री च, ३/३, पृ.– ३३०।

१५. तत्रैव।

१६. तदेव, पृ.– ३३१।

१७. न्यायकुसुमाञ्जलिः, सम्पा. श्रीमोहनभट्टाचार्यः, ३/२, पृ.– २३४।

१८. प्रकाशः, न्यायकुसुमाञ्जलिः, सम्पा. पादपद्मोपाध्यायः ढुण्ढिराजशास्त्री च, पृ.– ३२९।

**परिशीलितग्रन्थपञ्जिः**

**आकरग्रन्थाः**

उदयनाचार्यः। *आत्मतत्त्वविवेकः*। सम्पा. केदारनाथ-त्रिपाठी। वाराणसी : चौखम्बा-संस्कृत-सीरीज-अफिस, १९९७।

उदयनाचार्यः। *आत्मतत्त्वविवेकः*। सम्पा. ढुण्ढिराज-शास्त्री। वाराणसी : चौखम्बा-संस्कृत-सीरीज-अफिस, १९९७।

उदयनाचार्यः। *आत्मतत्त्वविवेकः*। सम्पा. विन्ध्येश्वरी-प्रसाद-द्विवेदी लक्ष्मण-शास्त्री-द्राविडश्च। कलिकाता : द्य रयाल एसियाटिक् सोसाइटि अफ़् वेङ्गल, १९३९।

उदयनाचार्यः। *आत्मतत्त्वविवेकः*(प्रथमः खण्डः)। सम्पा. दीननाथ-त्रिपाठी। कलिकाता : संस्कृत-कलेज, १९८४।

उदयनाचार्यः। *आत्मतत्त्वविवेकः*(द्वितीयः खण्डः)। सम्पा. दीननाथ-त्रिपाठी। कलिकाता : संस्कृत-कलेज, १९८९।

उदयनाचार्यः। *आत्मतत्त्वविवेकः*(तृतीयः खण्डः)। सम्पा. दीननाथ-त्रिपाठी। कलिकाता : संस्कृत-कलेज, १९९०।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः*। सम्पा. चन्दन-भट्टाचार्यः। कलकाता : महाबोधि-वुक-एजेन्सी, २०१४।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः*। सम्पा. पद्मप्रसादोपाध्यायः ढुण्ढिराज-शास्त्री च। वाराणसी : चौखम्बा-संस्कृत-सीरिज, १९५७।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः*। सम्पा. श्रीमोहन-भट्टाचार्यः। कलकाता : पश्चिमवङ्ग-राज्य-पुस्तक-पर्षत्, १९९५।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः*। सम्पा. श्यामापद-मिश्रः। कलकाता : पश्चिमवङ्ग-राज्य-पुस्तक-पर्षत्, १३९०(बङ्गाब्दः)।

उदयनाचार्यः। *लक्षणावली*। सम्पा. विन्ध्येश्वरी-प्रसाद-द्विवेदी। वेनारस : राज-राजेश्वरी, १८९७।

**सहायकग्रन्थाः**

अन्नंभट्टः। *तर्कसंग्रहः*। सम्पा. नारायण-चन्द्र-गोस्वामी। कलकाता : संस्कृत-पुस्तक-भाण्डार, १४१३(बङ्गाब्दः)।

उदयनाचार्यः। *किरणावली*। सम्पा. नरेन्द्र-चन्द्र-वेदान्ततीर्थः। कलकाता : दि एशियाटिक-सोसाइटि, २००२(प्रथमं संस्करणम् १९५६)।

उद्द्योतकरः। *न्यायवार्त्तिकम्*। सम्पा. विन्ध्येश्वरी-प्रसाद-द्विवेदी। वाराणसी : चौखम्बा-संस्कृत-सीरिज, १९१३।

गौतमः। *न्यायसूत्रम्*। सम्पा. गङ्गानाथ-झा। न्यायदर्शने; वात्स्यायनभाष्यसहितः। काशी : चौखम्बा-संस्कृत-संस्थान, १९२५।

गौतमः। *न्यायसूत्रम्*। सम्पा. फणिभूषण-तर्कवागीशः। *न्यायदर्शनम्*(प्रथमः खण्डः)। कलकाता : पश्चिमवङ्ग-राज्य-पुस्तक-पर्षत्, २०११(प्रथमं संस्करणम् १९८१)।

घोषालः, चित्तरञ्जनः। *उपनिषद् संग्रहः*। कलकाता : ग्रन्थिक-संस्करणम्, १३९४।

जयन्तभट्टः। *न्यायमञ्जरी*। सम्पा. पञ्चानन-तर्कवागीशः। कलिकाता : कलिकाता विश्वविद्यालय, १९३९।

धर्मकीर्तिः। *प्रमाणवार्त्तिकम्*। सम्पा. द्वारिकादास-शास्त्री। वाराणसी : चौखम्बा-संस्कृत-संस्थान, १९६८।

धर्मकीर्तिः। *न्यायविन्दुः*। सम्पा. सञ्जित-कुमार-साधुखाँ। कलकाता : सदेश,२००७।

नारायणभट्टः। *मानमेयोदयः*। चेन्नाइ : थियोजफिकाल सोसाइटि, १९३३।

नारायणभट्टः। *मानमेयोदयः*। सम्पा. दीननाथ-त्रिपाठी। कलकाता : संस्कृत-पुस्तक-भाण्डार, १९९०।

पतञ्जलिः। *पातञ्जलदर्शनम्*। सम्पा. पूर्णचन्द्र-शर्मा। कलकाता : पश्चिमवङ्ग- राज्य-पुस्तक-पर्षद्, २००५(द्वितीयं संस्करणम्) (प्रथमं संस्करणम् १८९८)।

माधवाचार्यः। *सर्वदर्शनसंग्रहः*। सम्पा. सञ्जित-कुमार-साधुखाँ। सर्वदर्शनसंग्रहे बौद्धदर्शन ओ जैनदर्शन। कलकाता : सदेश, २०११(प्रथमं संस्करणम् २००५)।

विश्वनाथः। *भाषापरिच्छेदः*। सम्पा. पञ्चानन-भट्टाचार्यः। कलकाता : संस्कृत- पुस्तक-भाण्डार, १३७७(बङ्गाब्दः)।

गोस्वामी, राधामाधवः। *न्याये आत्मतत्त्व-समीक्षा*। *अन्वीक्षा* : भोल. ३०। कलकाता : यादवपुरविश्वविद्यालय, २००९।

सिंहः, मनीषा। *न्यायवैशेषिकदर्शने ईश्वरः*। *अन्वीक्षा* : भोल. ३३। कलकाता : यादवपुरविश्वविद्यालय, २०१२।

Dasgupta, S.N. *A History of Indian Philosophy* (vol.1). Delhi : Motilal Banarsidass, 1988.

Hiriyanna, M. O*utline of Indian Philosophy*. Delhi : Motilal Banarsidass, 2009(rpt.) (1993 1st Ed.).

NarayanaBatta. *Manameyodaya*. Ed. C. Kunhan Raja & S. S. Suryanarayana Sastri. Madras : Theosophical Publishing House, 1933.

S. Kuppuswami Sastri. *A Primer of Indian Logic.* U.S : Franklin Classics Trade Press, 2018.

# श्रीशङ्कराचार्यप्रतिपादिताया लक्ष्यसाधनभूतैकत्वबुद्धेर्विश्लेषणं स्वामिविवेकानन्ददिशा च तस्याः सामाजिकसमन्वयसाधकत्वविमर्शः

विवेक-कर्मकारः

**सारसंक्षेपः**

सत्यज्ञानानन्तस्वरूपं ब्रह्म एकमेवाद्वितीयम्। ब्रह्मण एकत्वात् तस्मिन् स्वगत-सजातीय-विजातीयभेदा न वर्तन्ते, न वा तस्य वस्तुतः परिच्छेदः सम्भवति। अन्तःकरणोपहितचैतन्यस्वरूपा जीवा ब्रह्मणोऽभिन्नाः, भेदश्च तेषाम् अनित्यान्तःकरणोपाधिवशात्। अतो न हि जीवब्रह्मणोरस्ति वास्तविको भेदः, न वा जीवानां चैतन्यदृष्ट्या मिथो वास्तविको भेदः सम्भवति। एतादृशी एकत्वबुद्धिः शङ्कराचार्येण गीतोपनिषद्भाष्यादिषु प्रतिपादिता। तस्या एकत्वबुद्धेः समाजे पूर्णतः प्रयोगः शङ्कराचार्यकाले असम्भव आसीत् विविधसामाजिकदार्शनिककारणवशात्। समाजे एकत्वबुद्धिमाधारीकृत्य समत्वस्याप्रयोगं प्रति राजनैतिकम् अर्थनैतिकं चोद्देश्यं च शङ्कराचार्यस्यासीदिति वक्तुं न शक्यते। शङ्कराचार्यः न हि राजानं कञ्चित्सेवमानो दृष्टः। जनानां निष्कामकर्मणि प्रेरणद्वारा निस्त्रैगुण्ये मार्गे प्रवर्तनमेव तस्यासीदुद्देश्यम्। "अर्थमनर्थं भावय नित्यमि"त्यसकृदुच्चारयद्भिः शङ्करभगवत्पादैः समाजस्यार्थनैतिकोन्नतये अथवा कस्यचिद् वर्णविशेषस्य अर्थनैतिकोन्नतये एकत्वबुद्धेर्लोके अप्रयोग उक्त इति चेन्न, व्याघातदोषापत्तेः। उपनिषदाधृतायाः शङ्कराचार्यप्रपञ्चितायाः एकत्वबुद्धेः समाजे प्रयोगोपाय ऊनविंशशताब्द्यां विवेकानन्देन कल्पितः। एकत्वबुद्धिः प्रेमपर्यवसायिनीति प्रतिपाद्य एकत्वबुद्धेः समाजे प्रयोगे सीमकल्पनं तेन विहितम्। शङ्कराचार्यप्रतिपादिताया एतस्या एकत्वबुद्धेः विवेकानन्ददिशा सामाजिकसमन्वयसाधकत्वं विविधप्रेक्षाभिरत्र प्रबन्धे आलोचितम्।

**कुञ्चिकाशब्दः**

एकत्वबुद्धिः, उपनिषद्, अद्वैतवेदान्तः, शङ्कराचार्यः, विवेकानन्दः, भारतीयसमाजः, वर्णजातिव्यवस्था, सामाजिकसमन्वयः।

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्यद्वैतवेदान्तराद्धान्तः। सत्यत्वं स्वस्वरूपाव्यभिचारित्वं कालत्रयाबाध्यत्वापरपर्यायम्। ज्ञानस्वरूपं देशकालवस्तुरूपत्रिविधपरिच्छेदरहितं ब्रह्मतत्त्वं नित्यम् एकञ्च। परिदृश्यमानमिदं नामरूपव्याकृतमनेककर्तृभोक्तृसंयुक्तं जगत् मिथ्या। मिथ्यात्वं च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्। व्यावहारिकसत्ताविशिष्टम् इन्द्रियसन्निकृष्टं जगदिदं पारमार्थिकसत्ताकब्रह्मणि अधिष्ठाने शुक्तावारोपितरजतवद् मिथ्याज्ञानवशाद् आरोपितं, शुक्तिदर्शनादनन्तरं रजतबाधवद् ब्रह्मरूपाधिष्ठानज्ञानोत्तरकालीनो बाधः सत्यत्वबुद्धिहानं वा जगतः सञ्जायते। अतो यावन्न ब्रह्मसाक्षात्कारस्तावन्न जगन्मिथ्यात्वप्रतीतिः। अन्तःकरणोपहितं चैतन्यं जीवः, जीवाश्च बहवः। अन्तःकरणं ब्रह्मविषयकाज्ञानपरिणामो मिथ्याभूतः। यथा घटपटादिभिरवच्छिन्नाकाशानाम् आपाततो भेदप्रतीतावपि न तत्त्वतो भेदः, उपाधिनाशे भेदाननुभवात्, तथैव अन्तःकरणेनोपहितं चैतन्यं न मूलचैतन्याद्भिन्नं, मिथ्याभूतेनोपाधिनोपहितानां मिथः, उपाधेयोपहितानां वा तात्त्विकभेदासम्भवात्। पूर्वोक्तमूलतत्त्वत्रयोपबृंहणाय शङ्कराचार्योत्तरकालीनाद्वैतवेदान्तप्रवक्तृभिः बहुविधप्रक्रियाः कल्पिताः। ब्रह्मणः सत्यत्वमुपपादयितुं सदद्वैत-भावाद्वैतरूपप्रक्रियाद्वयं, जगन्मिथ्यात्वमुपपादयितुम् अजातवाद-दृष्टिसृष्टिवाद-सृष्टिदृष्टिवादरूपप्रक्रियात्रयं, जीवत्वं

जीवब्रह्मणोरेकत्वं वोपपादयितुम् अवच्छेदवाद-प्रतिबिम्बवादा-भासवादरूपप्रक्रियात्रयं दरीदृश्यते। परन्त्वेतासां प्रक्रियाणां परस्परं सूक्ष्मभेदालोकनेऽपि मूलतत्त्वत्रयाङ्गीकृतौ न काचिद् विमतिः। तस्माच्चाकूतम् अप्पय्यदीक्षितैः –

प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं
सन्नह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः।
तन्मूलानिह संग्रहेण कतिचित् सिद्धान्तभेदान् धियश्-
शुद्ध्यै सङ्कलयामि तातचरण-व्याख्यावचःख्यापितान्।। (सिद्धान्तलेशसङ्ग्रहः १)

ब्रह्मणः एकत्वमुपनिषत्सु असकृत्प्रतिपादितम्, विविधोपपत्तिप्रपञ्चैरालोचितं चाद्वैतवेदान्तग्रन्थेषु। "सदेव सौम्येदमग्र आसीद्। एकमेवाद्वितीयम्" (छा.उ. ६.२.१), "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" (श्वे.उ. ६.११), "एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" (क.उ. २.२.११), "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।।" (ब्र.उ. १२), 'एको देवो बहुधा सन्निविष्टः' (तै. आ. ३.१४.१) 'एकः सन्बहुधा विचार' (तै. आ. ३.११.१) 'त्वमेकोऽसि बहूननुप्रविष्टः' (तै. आ. ३.१४.१३) 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजै' (ऐ.उ. १.१.१), "एकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" (मा.उ. ७) – इत्यादिष्वसंख्येयासु श्रुतिषु ब्रह्मण एकत्वं प्रतिपादितम्। ब्रह्मण एकत्वं च ब्रह्मणि सजातीय-स्वगत-विजातीयभेदाभावकारणात्। तथाहि, 'एकमेवाद्वितीयम्' इति छान्दोग्यवाक्यव्याख्यानवेलायाम् एकमेवेति पदद्वितयेन ब्रह्मणि सजातीयस्वगतभेदाभावः, अद्वितीयमिति पदेन च विजातीयभेदाभावः प्रकाशितः इति आनन्दगिरिणा निर्दिश्यते। विद्यारण्यस्वामिभिः अभिनवनारायणेन्द्रसरस्वतीभिर्विविधाभिरुपपत्तिभिः एकमिति पदेन ब्रह्मणि सजातीयभेदाभावः, एवेति पदेन च स्वगतभेदाभावः, अद्वितीयमिति पदेन च विजातीयभेदाभावः प्रदर्शितः। एतेषां भेदानां स्वरूपप्रतिपादनप्रसङ्गे विद्यारण्यस्वामिना पञ्चदश्यामुच्यते –

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः।। इति। (पञ्चदशी २.२०)

तथाहि एकस्य वृक्षस्य वृक्षान्तरात् भेदस्तु सजातीयभेदः, एकस्मिन्वृक्षे वृक्षत्वरूपसमानजातिविशिष्टस्य अपरस्य अवस्थानासम्भवात्। वृक्षः अवयवी, तत्रावयवरूपेण मूलपत्रपुष्पफलकाण्डादयः वर्तन्ते। वृक्षः न केवलं पत्रं, न वा केवलं पुष्पं, न वा केवलं मूलम्। एवं वृक्षस्य पत्रपुष्पमूलादिभिः स्वावयवैर्यो भेदः स स्वगतो भेदः। वृक्षे पाषाणादीनां वृक्षत्वजातिहीनानां भेदस्तु विजातीयभेदः।

ब्रह्मणि एते त्रयः भेदाः न सम्भवन्ति ब्रह्मण एकत्वात् निरवयवत्वाच्च। तथाहि, ब्रह्मण एकत्वात् तत्सजातीयद्वितीयस्य अभावात् न ब्रह्मणि सजातीयभेदः सम्भवति। सांख्यमते यद्यपि प्रधानमेकमेव तथापि सत्त्वरजस्तमोगुणात्मकत्वात् अनेकात्मकं, न तथा ब्रह्मणि अनेकात्मकत्वमाशङ्कनीयम्, अनेकात्मकत्वे सावयवत्वात् अवयवोपचयापचयात्मकवृद्धिनाशापत्तेश्च। अतः श्रुतौ एवेत्यवधारणेन ब्रह्मण निरवयवत्वमनेकात्मकत्वाभावश्च ख्यापितम्। न हि ब्रह्मणि स्वगतभेदः सम्भवति, ब्रह्मणो निरवयवत्वात् "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (श्वे.उ. ६.१९), "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्" (मु.उ. २.२.१०), "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः" (मु.उ. ३.१.८) इत्यादिश्रुतेश्च। ब्रह्मविजातीयस्य द्वितीयस्याभावात् न हि ब्रह्मणि

विजातीयभेदप्रसङ्गः। ब्रह्मण एकत्वात् न हि ब्रह्मणो वस्तुतः परिच्छेदः सम्भवति। तथाहि, ब्रह्म देशतः कालतः वस्तुतश्च अपरिच्छिन्नम्। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतावनन्तपदेन अपरिच्छिन्नत्वमात्मन आम्नायते। द्वितीयवस्तुस्थितौ एव एकं वस्तु अपरेण परिच्छिद्यते। ब्रह्मण एकत्वात् न हि ब्रह्म वस्त्वन्तरेण परिच्छिद्यते।

ब्रह्मणः एकत्वात् जीवानां च ब्रह्मणः अभिन्नत्वात् साधचतुष्टयसम्पन्नः शुद्धचित्तः जीवः श्रवण-मनन-निदिध्यासनद्वारा जीवब्रह्मणोरेकत्वं साक्षात्करोति। ब्रह्मणः एकत्वात् निर्गताज्ञानकल्मषो जीवो नैव नानात्वं पश्यति। एतादृशैकत्वदृष्टिरेव जीवन्मुक्तस्य लक्षणम्। एतादृशैकत्वप्रज्ञायां प्रतिष्ठितायां जीवो मुच्यते। तत्र "को मोहः कः शोकः एकत्वमनुपश्यतः" (ई.उ ७) "एकधैवानुद्रष्टव्यं" (बृ.उ. ४.४.२०) "नेह नानास्ति किञ्चन" (बृ.उ. ४.४.१९) "तत्केन कं पश्येत्" (बृ.उ. २.४.१४) "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्॥" (क.उ. २.५.१३) – इत्यादीन्युपनिषद्वाक्यान्येवात्र प्रमाणम्। ब्रह्मणि भेदं पश्यताम् अज्ञानसद्भावात् न हि मुक्तिः सम्भवति, "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (बृ.उ. ४.४.१९) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" (तै.उ. २.७.३४) इत्यादिश्रुतेः। मुक्तः सर्वभूतेषु आत्मानं, सर्वभूतानि च आत्मनि वीक्षते। अतः कस्माच्चिदपि न जुगुप्सते। सर्वभूतेषु एकत्वमनुपश्यतः न वा शोकमोहौ सम्भवतः, शोकमौहौ अज्ञानकारणादुत्पद्येते आत्मैकत्वविज्ञानेन च अज्ञानरूपबीजनाशात् तत्कार्यभूतौ शोकमोहौ अपि नश्यतः। तथाहि ईशोपनिषद्भाष्ये उच्यते शङ्कराचार्येण – "शोकश्च मोहश्च कामकर्मबीजमजानतो भवति, न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः"[१] इति।

श्रीशङ्करभगवत्पादैर्गीताभाष्ये स्थितप्रज्ञलक्षणप्रपञ्चनवेलायामुच्यते यत् – "सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात्"[२] इति। मुक्तस्य कृतार्थस्य यल्लक्षणं तदेव साधनं मुमुक्षोरिति तात्पर्यम्। तथाहि, पूर्वालोचितैकत्वबुद्धिः या हि मुक्तस्य लक्षणरूपेण विराजते, सा एव साधनं मुमुक्षोः। तद्यथा सत्यवादित्वं सज्जनस्य लक्षणं चेत् सज्जनीभवनाभिलाषी सत्यवादित्वं साधनरूपेणाङ्गीकरोति। तथैव मुक्तस्य लक्षणभूता या एकत्वबुद्धिः या च लक्ष्यभूता मुमुक्षोः, सा एव एकत्वबुद्धिः साधनरूपेण मुमुक्षुणाङ्गीक्रियते। एकत्वबुद्धेरभ्यासेन क्रमात्स लक्ष्यभूतां तामवाप्नोति। महता यत्नेन सा एकत्वबुद्धिर्मुमुक्षुणा सम्पादनीया। ननु, जीवब्रह्मणोरेत्वबुद्धिः सर्वभूतेषु चात्मबुद्धिर्हि मुक्तस्य सम्भवति, न मुमुक्षोरिति चेद् वाढम्, तस्य जीवब्रह्मणोर्भेदबुद्धौ सत्यामपि एकत्वबुद्धिरारोपणीया। अतो मुमुक्षुः सर्वत्रात्मबुद्धिं कुर्यात्, न हि कुत्रापि भेदं पश्येत्। एतादृशीमात्मबुद्धिं कृत्वा यतमानस्य साधकस्य ज्ञाननिष्ठायोग्यतापादनात् श्रवण-मनन-निदिध्यासनद्वारा मोक्षः सिध्येदिति तात्पर्यम्। उच्यते च श्रीमद्भगवद्गीतासु –

> विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
> शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥ (गीता ५.१८) इति।

धर्मार्थकाममोक्षाः हि पुरुषार्थाः। तेषु मोक्षः परमपुरुषार्थः, मोक्षस्य आत्यन्तिकदुःखनिवृत्तिस्वरूपत्वात् परमानन्दस्वरूपत्वाच्च। मोक्षश्च अज्ञानतज्जन्याखिलभेदबुद्धिनिवृत्तौ सम्भवति। अतः परमानन्दप्रपित्सुना लक्ष्यभूतैकत्वबुद्धेः साधनं सुतरां विधेयम्। आध्यात्मिकसाधनेषु बद्धादराः भारतीयाः शङ्कराचार्यकालादेव यदि एतस्याः एकत्वबुद्धेः साधनमकरिष्यन् तर्हि समाजे सर्वत्रापि ऐक्यं सुप्रतिष्ठितम् अभविष्यत्। भारतीयास्तिकदर्शनेषु अद्वैतवेदान्तदर्शनस्यैव सर्वाधिकः प्रभावो भारतवर्षे आलोक्यते। नवमशताब्द्यां शङ्कराचार्येण आभारतं पर्यट्य वेदविरुद्धमतानाम् अद्वैतविरोधिमतानां च खण्डनपुरःसरम् औपनिषदं वेदान्तदर्शनं प्रतिष्ठापितम्। भारतवर्षस्य चतुर्षु

दिक्षु चत्वारः मुख्यमठास्तेन स्थापिताः, असंख्येयाश्चापरे मठाः अद्वैतवेदान्तमतानुसारिणस्ततः समुद्भूताः, इदानीमपि असंख्येयाः आभारतं वर्तन्ते। अद्वैतवेदान्ततत्त्वमनुसृत्य जीवनं यापयतां संख्या इदानीमपि प्रशंसनीया। अतः उपनिषत्प्रोक्तया शङ्कराचार्येणोपबृंहितया लक्ष्य-साधनभूतयैकत्वबुद्ध्या समाजे साम्यवादस्थापनं सुशकमासीत्। परन्तु विविधकारणवशात् तादृशैकत्वबुद्धेर्लौकिककव्यवहारे प्रयोगो नालोकितः, केवलम् आध्यात्मिकाभ्युन्नतये तात्त्विकालोचनायां चैव सा एकत्वबुद्धिः पर्यवसिता। रामकृष्ण-रमणमहर्षि-निसर्गदत्तप्रमुखाणां मुक्तानां व्यवहारे आचण्डालाप्रतिहतवेगः प्रेमप्रवाहः यद्यपि आलोकितः, परन्तु मुमुक्षूणां व्यवहारे तस्या एकत्वबुद्धेः प्रयोगो न दृष्टः। अत्र च सम्भावितानि कारणानि अध आलोच्यन्ते।

जीवब्रह्मणोरेकत्वम्, सर्वजीवानां च औपाधिको भेद इति तत्त्वस्य व्यवहारेऽपि सर्वथानुसृतौ अद्वैतशास्त्राणामेवाप्रवृत्तिप्रसङ्गः। शङ्कराचार्येण अध्यासभाष्ये उच्यते – "तमेतमविद्याख्यमात्माना-त्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि।[३] … "शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा आत्मनः परलोकसम्बन्धमधिक्रियते, तथापि न वेदान्तवेद्यम् अशनायाद्यतीतम् अपेतब्रह्मक्षत्रादिभेदम् असंसार्यात्मतत्त्वम् अधिकारेऽपेक्षते, अनुपयोगात् अधिकारविरोधाच्च"[४] इति। मोक्षपरस्यापि शास्त्रस्य भेदपुरःसरमेव प्रवृत्तिर्भवति, का कथा पुनः क्रियाकारकफलभेदवतः कर्मपरस्य शास्त्रस्य। शिष्य-शास्त्र-शास्तृरूपभेदमङ्गीकृत्यैव शास्त्राणां प्रवृत्तिः, जीवब्रह्मणोरेकत्वबुद्धौ सत्यां न हि शास्त्रेषु प्रवृत्तिः स्यात् मुमुक्षूणाम्, सर्वत्रैकस्यैव ब्रह्मणः सत्त्वात्। अतो भेदविजृम्भितम् एव मोक्षशास्त्रम्। किं बहुना, शङ्कराचार्येणापि तत्त्वोपदेशग्रन्थे उच्यते – "भावाद्वैतं सदा कुर्यात् क्रियाद्वैतं न कर्हिचित्" (तत्त्वोपदेशः ८७)[५] इति। अतो जीवब्रह्मणोरैक्यं जीवानां च तात्त्विकभेदाभावः इत्येवम् अद्वैतबुद्धिः मुमुक्षोः तिष्ठेत्, एतदेव भावाद्वैतम्। परन्तु स लोकव्यवहारे लौकिकक्रियासु च न हि अद्वैतबुद्धिं प्रयोजयेत्, क्रियासु क्रियाकारकफलभेदज्ञानपुरःसरमेव तस्य प्रवृत्तिर्भवेत्, भेदज्ञानाभावे सति कर्मप्रवृत्यनुपपत्तेः।

एकत्वबुद्धेः समाजे अप्रयोगं प्रति सामाजिकं कारणमपि भवति दृग्गोचरम्। तथाहि, भारतवर्षस्य स्वर्णयुगाभिधेये गुप्तयुगे (ख्रिस्टीयायाः चतुर्थशताब्द्याः षष्ठशताब्दीं यावत्) वर्णाश्रमधर्मानुसारेण समाजनियमाः निर्मिताः, मनुयाज्ञवल्क्यादिप्रणीतस्मृतीनाम् आधारेण शासनव्यवस्था कल्पिता, पूर्वपरम्परानुसारेण च विविधशास्त्राणि प्रणीतानि। ततो द्विशतवत्सरेभ्यः परमाविर्भूतः शङ्कराचार्योऽपि सुष्ठु समाजविनिर्माणाय वर्णाश्रमधर्मस्य माहात्म्यं सम्प्रदायमनुसृत्यैव सङ्कीर्तयति, अतः न हि शूद्राणां ब्रह्मज्ञानेऽधिकार इति अपशूद्राधिकरणे प्रस्तौति।[६] तत्कालीनसमाजे वर्णाश्रमव्यवस्थाविपर्यये वर्णाश्रमधर्माननुसृतौ च समाजे अव्यवस्था स्यात्, सामाजिकानाम् ऐहिकामुष्मिकी अभ्युन्नतिश्च न स्यादिति तन्मतम्। अतः एकत्वबुद्धेः प्रयोगः समाजे सञ्जायते चेत् समाजे अव्यवस्था स्यात्। समाजे वरावरभावः स्वाभाविकः, तस्यानङ्गीकारे व्यवस्थाभावः समापतेत्। अतो वेदान्तमन्त्राणामसाम्प्रदायिकं व्याख्यानं गर्हितमिति तेषां मतम्। उक्तञ्च तेन गीताभाष्ये – "असम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदुपेक्षणीयः"[७] इति। अतो समाजव्यवस्थारक्षणायैतादृशाया एकत्वबुद्धेः लोकव्यवहारे प्रयोगस्तदा दुःशकः आसीत्। विप्लवेन समाजपरिवर्तने सति समाजस्थैर्यं नश्यति, अनन्तकष्टमाप्नुवन्ति सामाजिकाः, विवर्तनस्य मार्गः एव समाजपरिवर्तनस्य उत्कृष्टतमः मार्गः। विवर्तनमार्गे चलन् समाजः कस्याश्चित् प्रक्रियाया व्यवस्थायाः वा सौविध्यमसौविध्यं च विचारयितुमवकाशं लभते, सामूहिककल्याणकरत्वं विचार्य अभिनवायाः

प्रक्रियाया व्यवस्थाया वा हानम् उपादानं च यथायथं कर्तुं शक्नोति। अविमृश्यकारित्वं यथा व्यक्तिं तथा समाजमपि नाशयति।

अस्याः एकत्वबुद्धेः समाजे अप्रयोगं प्रति किञ्चिद्राजनैतिकं कारणं स्यादिति चिन्तनं न युक्तम्। यतो हि शङ्कराचार्यः राजसभायां नासीत्। संसारविरक्तानामात्मस्वरूपज्ञानाय जनहिताय समाजस्याभ्युन्नतये च तेन कार्याणि विहितानि। ननु, स्मृतियुगे ब्राह्मणाः स्वाधिपत्यं स्वश्रेष्ठत्वं च प्रतिष्ठापयामास। तस्याधिपत्यस्य अग्रेनयनमेव शङ्कराचार्यैर्विहितमिति युक्त्यैकत्वबुद्धेरप्रयोगं प्रत्यस्ति राजनैतिकं कारणमिति न वाच्यम्, बौद्धधर्मं प्रतिहत्य सनातनहिन्दुधर्मस्य पुनःप्रतिष्ठा शङ्कराचार्यस्य अव्यवहितपूर्वकाले एव कुमारिलभट्टादिभिर्विहिता। तदा सनातनहिन्दुधर्मस्य मूलग्रन्था एव यदि तेन मुहुर्मुहुर्दूषिताः स्युस्तर्हि पुनःप्रतिष्ठापिते वैदिकधर्मे आस्था एव न स्याज्जनानामिति धिया श्रुतिस्मृतिविरोधे न तस्य प्रवृत्तिरित्यनुमातुं शक्यते। अतो न किञ्चिद्राजनैतिकमुद्देश्यमासीत् शङ्करभगवत्पादस्य इत्युद्घोषयितुं शक्यते। "अर्थमनर्थं भावय नित्यम्" इत्यसकृदुच्चारयद्भिः शङ्करभगवत्पादैः समाजस्यार्थनैतिकोन्नतये अथवा कस्यचिद् वर्णविशेषस्य अर्थनैतिकोन्नतये एकत्वबुद्धेर्लोके अप्रयोग उक्त इति चेन्न, व्याघातदोषापत्तेः। अतोऽस्माकं मते एकत्वबुद्धेरप्रयोगं प्रति राजनैतिकार्थनैतिककारणासद्भावेऽपि सामाजिकं दार्शनिकं वा कारणमनुसन्धातुं शक्यते।

शङ्कराचार्यस्य (७८८ खिस्टाब्दात् ८२० खिस्टाब्दं यावत्) तिरोभावात् सहस्रवत्सरेभ्योऽनन्तरमाविर्भूतः स्वामिविवेकानन्दः (१८६३ खिस्टाब्दात् १९०२ खिस्टाब्दं यावत्) अद्वैतवेदान्तप्रोक्ताया एकत्वबुद्धेः समाजे प्रयोगाय अभिनवमुपायं चिन्तयामास। स्वामिविवेकानन्दः औपनिषदमद्वैतमेव मुख्यतः स्वीकृतवान्। शङ्कराचार्येण सह तस्य वैमत्यं केषुचित्स्थानेषु प्रकटीभूतम्।[८] परन्तु एकत्वबुद्धेः समाजे प्रयोगविषये शाङ्करं मतमनुसृत्यैव तेन आलोचना विहिता 'Practical Vedanta' (कर्मजीवने वेदान्तः) इति शीर्षकेषु भाषणेषु।[९] अरण्ये विविक्तप्रदेशे एव वेदान्तचिन्ता न सीमाबद्धा स्यात्, प्रात्यहिकलोकव्यवहारे अपि वेदान्तचिन्ता वेदान्ततत्त्वानामाचरणं च सुतरां सम्भवति इति तेन सोपपत्ति प्रतिपादितमेषु भाषणेषु।[१०]

शङ्कराचार्यः यादृश्यां समाजव्यवस्थायाम् आविर्बभूव ततो बहुधा भिन्नायामेव विवेकानन्दः आविर्भूतः इत्यनुक्तसिद्धम्। विवेकानन्दकाले ततः पूर्वञ्च वैदेशिकानां महम्मदीयानाम् आङ्गलानां च त्रैवर्णिकभिन्नानां निरन्तरं शासनात् वर्णजातिव्यवस्थाविषये भारतीयसमाजे शैथिल्यमागतमासीत्। वङ्गप्रदेशेषु आविर्भूतस्य श्रीचैतन्यस्य कृष्णप्रेमग्रन्थिना वर्णजातिकृतभेदमुपेक्ष्यैव सर्वेषां मनुष्याणां भगवद्भक्तिरूपैकसूत्रेण[११] बन्धनं सञ्जातं, वर्णजातिव्यवस्थासु जनानामौदासीन्यं च आविर्भूतम्। बङ्किमचन्द्र-राममोहन-विद्यासागर-डिरोजोओ-रामकृष्ण-प्रमुखानां समाजसंस्कारकाणां यौक्तिक-विचारास्तदा न केवलं वङ्गप्रदेशेषु अपि तु आभारतं प्रसृता आसन्। अतः प्रचलितवर्णजातिव्यवस्थाविरोधपुरःसरं स्वमतस्थापनाय लब्धः अवकाशः विवेकानन्दस्वामिपादैः। सर्वे जीवाः ब्रह्म एव, नास्ति तेषु भेदः। अतः अस्पृश्यत्वादीनां कुसंस्काराणां समाजात् अपसारणं तेन काङ्क्षितम्। सर्वत्र समत्वदृष्टिविषये तेन उक्तं स्वदेशमन्त्रे – "वदत मूर्खभारतवासिनो दरिद्रभारतवासिनो ब्राह्मणभारतवासिनः चण्डालभारतवासिनो नो भ्रातरः"[१२] इति। परिव्राजकप्रबन्धे तेन उच्यते – "भातु नवं भारतम्। कर्षकस्य उटजं भित्त्वा हलं धारयद् धीवर-चर्मकार-मलवाहक-मालाकाराणामुटजेभ्यो भातु"[१३] इति।

समाजे समत्वबुद्धेः स्थापने भित्तिभूता काचिद् दृढा दार्शनिकी भित्तिरावश्यिकी। विवेकानन्दस्वामिभिर्वेदान्तप्रोक्ता एषा एकत्वबुद्धिरेव सामाजिकसमन्वयसाधने दृढभित्तिरूपेणाङ्गीकृता। प्राचीनधर्ममते ईश्वरेऽविश्वासवानेव नास्तिकः,

परन्तु यस्य आत्मनि विश्वासो नास्ति स एव नास्तिकः इति स्वामिनामभिनवाभिप्रायः। विषयस्यास्य परिष्करणाय उच्यते तैः – "न चायं विश्वासः जीवगतां क्षुद्रामस्मितामाधाय, यतो हि वेदान्तः एकत्ववादस्य शिक्षां प्रयच्छति। विश्वासस्यास्य तात्पर्यं सर्वभूतेषु प्रीतिः, सर्वेषु जीवजन्तुषु प्रीतिः, सर्ववस्तुषु प्रीतिः। अनेन महता विश्वासबलेन एव जगतः उन्नतिर्भविष्यति" इति।[१४]

स्वामिनो मते सर्वभूतेषु एकत्वबुद्धेः लक्षणं तावत् सर्वभूतेषु प्रेम। न हि ख्रिस्टमहम्मदादिप्रोक्त-स्वधर्मीयमात्रनिष्ठ-भ्रातृत्वद्वारेण, अपि तु अद्वैतवेदान्तप्रोक्ताखिललोकसमत्वबुद्ध्या एव समाजस्थापनं स्वामिनः अभीप्सितमासीत्। अत उक्तं तेन –

> क्वेशमन्विषति त्यक्त्वा बहुरूपैः पुरःस्थितम्।
> जीवे प्रेम हि यस्यास्ति स ईश्वरं हि सेवते।। इति।[१५]

यदा सर्वभूतेषु एकत्वबुद्धिः प्रतिष्ठिता स्यात् तदैव सर्वभुतेषु प्रेम सम्भवति। स्वामिनो मते या साधनभूता एकत्वबुद्धिः सा हि प्रेमपर्यवसायिनी। अतः आरोपिता एषा एकत्वबुद्धिः न हि विधिमोक्षशास्त्रवैयर्थ्यापत्तिं जनयति। सर्ववर्णैः स्वस्ववर्णकृत्यमपरित्यज्यापि एकत्वबुद्धेरस्या अभ्यासः कर्तुं शक्यते, अतः सामाजिकव्यवस्थाया अपि बलादुच्छेदो न भवति। स्वामिनो मते गुणानुरोधेन ब्राह्मणादिवर्णकल्पनम्, अतः यस्मिन् कस्मिंश्चिदपि वर्णे लब्धजन्मापि जीवः स्वगुणानुसारं ब्राह्मणत्वादिकमर्जयितुं शक्नोति। एतादृशीमेकत्वबुद्धिम् मनसि निधाय जीवप्रेम्णा पूरितमानसाः साधारणजनाः यदि सामाजिककार्येषु प्रवर्तेरन् तदा साम्यवादो न गन्धर्वनगरायितः स्यात्।

उपनिषत्प्रतिपादिता साध्यरूपा या एकत्वबुद्धिर्लोकव्यवहारविरोधिनी मुक्तलक्षणभूता सा एव साधनरूपा सती जीवानां ब्रह्मज्ञानहीनानामपि सामाजिकसमन्वयसाधनद्वारा वैयक्तिकीं सामूहिकीं चाभ्युन्नतिं जनयतीति विवेकानन्दस्वामिनां यच्चिन्तनं तद्ध्यभिनवमुल्लेखार्हञ्च। ननु यद्येषा आध्यात्मिकाभ्युदयसाधिका साधनरूपा एकत्वबुद्धिः लौकिकाभ्युदयायाप्यङ्गीकरणीया स्यात्तर्हि कुत्रैतायाः एकत्वबुद्धेः फलपर्यवसनामिति सुतरां चिन्तनीयम्। विवेकानन्दस्वामिभिस्तस्मात् महत्या युक्त्या एकत्वबुद्धेः प्रेमपर्यवसायित्वख्यापनद्वारा व्यावहारिकप्रपञ्चे तस्याः सीमकल्पनमपि विहितम्। जातिधर्मलिङ्गादिविविधोपाधिभिर्विभक्तेषु जनेषु अद्वैतप्रतिपादितैषा एकत्वबुद्धिः प्रेमोद्रेककारणं भवेत्, येन प्रेम्णा पारस्परिकद्वेषो दूरीभूतः स्यादुभयोः सहानवस्थानविरोधात्। तेन च सामाजिकसमन्वयः सम्भवेत्, अन्यथा नियममात्रप्रणयनेन पारस्परिकद्वेषकलुषितमानसानां सामाजिकानां समन्वयः न कथञ्चिदपि सम्भवति। अतोऽद्वैतवेदान्तप्रतिपादितैकत्वबुद्धेः परिपालनं सामजिकसमन्वयाध्वना वैयक्तिकसामाजिकाभ्युदयाभिलाषिभिः समैः सामाजिकैर्विधेयमिति विवेकानन्दस्वामिनां राद्धान्तः इति शम्।

**संकेतपञ्जिः**

छा.उ. = छान्दोग्योपनिषद्

श्वे.उ. = श्वेताश्वतरोपनिषद्

क.उ. = कठोपनिषद्

ब्र.उ. = ब्रह्मबिन्दूपनिषद्

तै.आ. = तैत्तिरीयारण्यकम्

मा.उ. = माण्डूक्योपनिषद्

मु.उ. = मुण्डकोपनिषद्

ई.उ. = ईशोपनिषद्

बृ.उ. = बृहदारण्यकोपनिषद्

तै.उ. = तैत्तिरीयोपनिषद्

सम्पा. = सम्पादकः

व्या. = व्याख्याकारः

**उल्लेखपञ्जिः**

१. उपनिषद्भाष्यम्, प्रथमखण्डः. पृ - ८

२. श्रीमद्भगवद्गीता. पृ – ११५

३. ब्रह्मसूत्रभाष्यम्. पृ - २१

४. तदेव, पृ – २३

५. The Works of Sri Śaṅkarācārya. Vol. 16. P206

६. 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि' (ब्रह्मसूत्रम् १.३.३४)

७. श्रीमद्भगवद्गीता. पृ – ५३५

८. विवेकानन्दस्वामिभिर्मोक्षोपायरूपेण कर्म-योग-भक्ति-ज्ञानानि प्रतिपादितानि। परा भक्तिः परमं ज्ञानम् च उभयोरैक्यं स्वामिनोपपादितम्। एतादृशानि बहुविधानि पार्थक्यानि शङ्करविवेकानन्दयोर्मतेषु द्रष्टुं शक्यन्ते।

९. स्वामी विवेकानन्देर वाणी ओ रचना, द्वितीयः खण्डः. पृ – १६७-२२१

१०. तदेव, पृ – १७० (वङ्गभाषायाः संस्कृतानुवादः)

११. श्रीचैतन्यमते हरिभक्तिपरायणः चण्डालोऽपि संस्कारहीनेभ्यः द्विजेभ्यः श्रेष्ठः। वैष्णवेषु श्रीचैतन्यमतानुयायिषु न हि जात्यादिकृतो भेदः परिगण्यते।

१२. स्वामी विवेकानन्देर वाणी ओ रचना, षष्ठः खण्डः. पृ – ९४ (वङ्गभाषायाः संस्कृतानुवादः)

१३. तदेव, पृ – ६४ (वङ्गभाषायाः संस्कृतानुवादः)

१४. स्वामी विवेकानन्देर वाणी ओ रचना, द्वितीयः खण्डः. पृ – १७६ (वङ्गभाषायाः संस्कृतानुवादः)

१५. स्वामी विवेकानन्देर वाणी ओ रचना, षष्ठः खण्डः. पृ – २१० (वङ्गभाषायाः संस्कृतानुवादः)

**परिशीलितग्रन्थपञ्जिः**

अप्पय्यदीक्षितः। *सिद्धान्तलेशसङ्ग्रहः कृष्णालङ्कारसमलङ्कृतः*। सम्पा. भाऊशास्त्री बझे। काशी-संस्कृत-ग्रन्थमाला ३६। वाराणसी: चौखम्बा-संस्कृत-संस्थानम्, २००७ (तृतीयसंस्करणम्)।

*उपनिषद्भाष्यम्* । सम्पा. मणिद्रविडः। प्रथमखण्डः। वाराणसी: महेश-अनुसन्धान-संस्थानम्, २००४ (द्वितीयसंस्करणम्)।

*उपनिषद्भाष्यम्* । सम्पा. मणिद्रविडः. द्वितीयखण्डः। वाराणसी: महेश-अनुसन्धान-संस्थानम्, २००५ (द्वितीयसंस्करणम्)।

गुप्तः, महेन्द्रनाथः। *श्रीश्रीरामकृष्णकथामृत* । कोलकाता: उद्बोधन-कार्यालयः, २०१२ (पञ्चत्रिंशत्तमं पुनर्मुद्रणम्)।

*चिन्तानायक विवेकानन्द* । सम्पा. स्वामी लोकेश्वरानन्दः। कोलकाता: रामकृष्ण मिशन् इनस्टिटिउट् अब कलचर, २००७ (द्वितीयसंस्करणस्य नवमं मुद्रणम्)।

विवेकानन्दः, स्वामी। *स्वामी विवेकानन्देर वाणी ओ रचना*। द्वितीयः खण्डः। कोलकाता: उद्बोधन-कार्यालयः, २०१२ (चतुर्थसंस्करणस्य अष्टाविंशतितमं पुनर्मुद्रणम्)।

विवेकानन्दः, स्वामी। *स्वामी विवेकानन्देर वाणी ओ रचना*। षष्ठः खण्डः। कोलकाता: उद्बोधन-कार्यालयः, २०१२ (चतुर्थसंस्करणस्य त्रयोविंशतितमं पुनर्मुद्रणम्)।

व्यासः। *श्रीमद्भगवद्गीता अष्टटीकोपेता* । सम्पा. वासुदेव-लक्ष्मण-पणशीकरः। व्रजजीवन-प्राच्यभारती-ग्रन्थमाला ६४। वाराणसी: चौखम्बा-संस्कृत-प्रतिष्ठानम्, २००९ (पुनर्मुद्रणम्)।

शङ्कराचार्यः*। विवेकचूडामणिः* । सम्पा. व्या. अरविन्दानन्दयतिः। विद्याभवन-प्राच्यविद्या-ग्रन्थमाला ८३। वाराणसी: चौखम्बा-विद्याभवनम्, १९९८ (पुनर्मुद्रणम्)।

शङ्कराचार्यः। *ब्रह्मसूत्रशाङ्करभाष्यम्* । सम्पा. जगदीशशास्त्री। दिल्ली: मोतीलाल-बनारसीदासः, २००० (पूनर्मुद्रणम्)।

*The Works of Śrī Śaṅkarācārya*. Vol. 16. Srirangam: Vani Vilas Press, 1910.

# समासाधिकारे योगविभागः - एका समीक्षा

बुलेट्-मण्डलः

**सारसंक्षेपः**

पाणिनीयव्याकरणे न केवलं सूत्रैः पदसिद्धिर्भवति अपि तु सूत्रैः सह वार्त्तिकानां भाष्याणाञ्चावश्यकता वर्तते। पदसिद्ध्यर्थं यथा व्याख्याने उदाहरणप्रत्युदाहरणवाक्याध्याहारादीनामावश्यकता दृश्यते तथैव अपरे केचन पदसिद्ध्युपायाः सन्ति। तेषूपायेषु योगविभागः अन्यतमः। पाणिनीयव्याकरणे बहुत्र योगविभागः स्वीक्रियते आचार्यैः। अष्टाध्याय्यां 'प्राक् कडारात् समासः'[१] इति सूत्रादारभ्य 'कडाराः कर्मधारये'[२] इति सूत्रात् प्राक् समासाधिकारो वर्तते। अस्मिन् समासाधिकारे त्रयः योगविभागाः स्वीकृताः। तेषु 'सह सुपा' इत्यत्र योगविभागविषये तु नास्ति आचार्याणां वैमत्यम्। यद्यपि सिद्धान्तकौमुदीकारेण 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति सूत्रे साक्षात् योगविभागः न आलोचितः तथापि 'वैयाकरणाख्यायां चतुर्थ्याः'[३] इति सूत्रस्य उदाहरणप्रसङ्गे 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इत्यस्य योगविभागः स्वीकृतः। तथाहि- आत्मनेपदम् इत्यादौ कथं समासः भवति इत्यस्मिन् प्रसङ्गे दीक्षितेनोक्तं- 'चतुर्थीति योगविभागात्समासः' इति। एवमेव 'एकादिश्चैकस्य चादुक्'[४] इति सूत्रस्य व्याख्यावसरे 'तृतीया तत्कृतार्थेन गुणवचनेन' इति सूत्रस्य योगविभागः स्वीकृतः। तदुक्तं दीक्षितेन- 'नञो विंशत्या सह समासे कृते एकशब्देन सह तृतीयेति योगविभागात्समासः। अनुनासिकविकल्पः। एकेन नविंशतिः एकान्नविंशतिः' इति। एवमत्र समासाधिकारे स्वीकृताः त्रयः योगविभागाः संक्षेपेण आलोचिताः।

**कुञ्चिकाशब्दः**

चतुर्थी, तृतीया, योगविभागः,समासः, सुपा।

**उपोद्घातः**

शब्दार्थमयेऽस्मिन् जगति सर्वेषां चिन्तनस्य मनोभावनायाः प्रकटनस्य च प्रधानं साधनं शब्दः एव। तत्र शब्दशास्त्रं हि व्याकरणम्। व्याक्रियन्ते शब्दाः अनेन इति व्याकरणम्। वि-आङ्पूर्वकात् कृधातोः करणे ल्युट्-प्रत्यये व्याकरणशब्दस्य निष्पत्तिर्भवति। व्याकरणेन शब्दानुशासनं क्रियते। व्याकरणेनैव शब्दानां तत्त्वावबोधः भवति। तदुक्तं भर्तृहरिणा वाक्यपदीये -

> अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
> तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥[५] इति।

तत्र बहुषु व्याकरणग्रन्थेषु पाणिनिमुनेः अष्टाध्यायी अन्यतमा। वर्तमानसमये पाणिनीयव्याकरणमेव मूर्धन्यस्थानभूतमस्ति। पाणिनीयव्याकरणे पदसिद्धिनिमित्तं बहवः उपायाः स्वीकृताः। तेषु उपायेषु केचन उपायाः स्वयं पाणिनिना आश्रिताः। केचन उपायाः परवर्तिवैयाकरणैः आश्रिताः। योगविभागरूपः उपायः परवर्तिवैयाकरणैः आश्रितः उपायः अस्ति। तत्र कः योगः कश्च योगविभागः इति जिज्ञासा सुतरामुदेति। 'योगे-योगे तवस्तरं वाजे-वाजे हवामहे। सखाय इन्द्रमूतये॥'[६] इत्यादौ ऋग्वेदे योगशब्दस्य उल्लेखः दृश्यते। अस्य मन्त्रस्यार्थः सायणाचार्येण एवं प्रतिपादितः- 'योगे योगे प्रवेशे प्रवेशे तत्कर्मोपक्रमे' इति। युजिर् योगे इति धातोः 'हलश्च' इति सूत्रेण घञ्प्रत्यये चजोः कु घिण्यतोः इति सूत्रेण कुत्वे योगशब्दः निष्पद्यते इति सायणाचार्येण स्वीकृतम्। 'युज समाधौ'[७] इति समाध्यर्थकात् युज्-धातोः 'भावे'[८] इति सूत्रेण घञ्प्रत्यये योगशब्दः निष्पद्यते। अयं योगशब्दः समाध्यर्थे प्रयुज्यते। 'अथ योगानुशासनम्' इति प्रथमयोगसूत्रभाष्ये व्यासदेवेन 'योगः समाधिः' इति व्याख्या कृता। वस्तुतः चित्तवृत्तेः निरोधः

एव योगः। तदुक्तं भगवता पतञ्जलिना द्वितीये सूत्रे 'योगश्चित्तवृत्तिनिरोधः' इति। क्षिप्तम्, मूढम्, विक्षिप्तम्, एकाग्रम्, निरुद्धम् इति पञ्चचित्तभूमिषु यत्किञ्चित् चित्तवृत्तिनिरोधावश्यम्भावाद् योगलक्षणस्य अतिव्याप्तिदोषवारणाय 'सर्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधः योगः' इति परिष्कृतार्थः। चित्तवृत्तिनिरोधरूपयोगश्च द्विविधः। राजयोगो हटयोगश्च। तत्र राजयोगः पतञ्जलिनोक्तः- 'योगश्चित्तवृत्तिनिरोधः' इति। हटयोगस्तु तन्त्रशास्त्रोक्तः। श्रीमद्भगवद्गीतायामुक्तं 'योगः कर्मसु कौशलम्' इति। तत्र यथास्थितवस्तुनः अन्यथारूपप्रतिपादने योगशब्दः व्यवह्रियते। यथा- संसारबन्धनहेतोरपि कर्मणः अबन्धमोक्षहेतुत्वम्। निरुक्तेऽपि योगशब्दस्य प्रयोगः दृश्यते। तथाहि- 'शास्त्रकृतो योगश्चेति'। सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तमेवं दूरस्थानामपि पदानामेकीकरणं योगः इत्युत्तरतन्त्रे पञ्चषष्टितमेऽध्याये सुश्रुतः लिखति। पाणिनीयधातुपाठे 'युज्-समाधौ' इति दिवादिगणीयः 'युजिर्-योगे'[९] इति रूधादिगणीयः 'युज्-संयमने'[१०] इति चुरादिगणीयः चेति धातुत्रयं विद्यते। युज्यन्ते लक्ष्याणि अस्मिन् इति योगः इति विग्रहे युजिर् योगे इति रुधादिगणीययुज्-धातोः 'करणाधिकरणयोश्च'[११] इति पाणिनीयसूत्रेण अधिकरणार्थे घञ्-प्रत्यये योगशब्दः निष्पद्यते। व्याकरणशास्त्रे योगशब्दस्यार्थः सूत्रम्। सूत्राण्येव योगपदेन गृह्यन्ते। महाभाष्ये बहुत्र सूत्रार्थे योगशब्दस्य प्रयोगः दृश्यते। प्रबन्धेऽस्मिन् योगविभागः इत्यस्य अर्थो भवति योगस्य अर्थात् सूत्रस्य विभागः योगविभागः।

प्राचीनकाले शिष्याः शास्त्राणि गुरुमुखात् श्रुत्वा मनसि धारयन्ति स्म। अध्ययनाध्यापनरीतिः सर्वथा मौखिकी आसीत्। अतः प्राचीनशास्त्राणि सूत्राकारेण रचितानि दृश्यन्ते। सूत्राण्यपि संहितारूपेणैव पठितानि स्मृतिसौकर्यार्थम्। व्याकरणशास्त्रस्य सूत्राण्यपि संहिताक्रमेणैव पठितानि। भगवता पाणिनिना अष्टाध्यायी संहिताक्रमेणैव लिखिता। अनन्तरं प्रवचनकाले योगविभागं कृत्वा उपदिष्टा। पाणिनिः स्वशिष्यान् सूत्रविच्छेदं कृत्वा उपदिदेश इत्यत्र भाष्यमेव प्रमाणम्। तथाहि उक्तं भाष्ये- 'उभयथा ह्याचार्येण शिष्याः प्रतिपादिताः। केचिद् आकडारादेका संज्ञा इति, केचित् प्राक्कडारात् परं कार्यमिति।'[१२] अत्र एकम् प्रमाणं यथा- स्थानेऽन्तरतमः उरण्रपरः इत्यपि पाठः भवितुमर्हति, स्थानेऽन्तरतमे उरण्रपरः इत्यपि। स्थानेऽन्तरतमे इति सप्तम्यन्तपाठे उकाररूपे अचि परे 'एचोऽयवायावः' इति सूत्रेण मकारोत्तरस्य एचः एकारस्य स्थाने अय् इत्यादेशे उकाररूपे अशि परे 'लोपः शाकल्यस्य' इति सूत्रेण अवर्णपूर्वस्य यकारस्य लोपे स्थानेऽन्तरतम उरण्रपरः इति सिध्यति। स्थानेऽन्तरतमः इति प्रथमान्तपाठे स्थानेऽन्तरतमस् इत्यवस्थायां 'ससजषोः रुः' इति सूत्रेण पदान्तस्य सस्य रूत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति सूत्रेण रोः यादेशे स्थानेऽन्तरतमय् उरण्रपरः इति स्थिते 'लोपः शाकल्यस्य' इति सूत्रेण यकारस्य लोपे स्थानेऽन्तरतम उरण्रपरः इति सिध्यति। अतः शङ्का भवति यत् अत्र सप्तम्यन्तपाठोऽस्ति अथवा प्रथमान्तपाठः। यदि सप्तम्यन्तपाठः स्वीक्रियते तर्हि अन्तरतमे स्थाने इति अन्वयः भवति। स्थाने इत्यस्य अर्थः तिष्ठन्ति अस्मिन् आदेशाः इति। अन्तरतमे इत्यस्य अर्थः सदृशतमे इति। तेन सदृशतमे स्थानिनि आदेशः भवतीति अर्थः भवति। सप्तम्यन्तपाठस्वीकारे अन्तरतमे इति स्थानिनः विशेषणं भवति। अर्थात् स्थानिनः अन्तरतमत्वं स्वीक्रियते। तेन इको यणचि इति सूत्रस्य अर्थः भविष्यति- सदृशतमस्य इकः स्थाने यण् भवति अचि परे इति। य् व् र् ल् इत्येते आदेशाः सदृशतमस्य स्थानिभूतस्य इकारादेः स्थाने भवन्ति। अर्थात् इ उ ऋ लृ इत्येताषां मध्ये यः सदृशतमः अस्ति तस्य स्थाने आदेशः भविष्यति। स्थानेऽन्तरतमः इति प्रथमान्तपाठस्वीकारे तु अन्तरतमः इति आदेशस्य विशेषणं भवति। तेन इको यणचि इति सूत्रस्य अर्थः भवति इकः स्थाने सदृशतमः यण् आदेशः भवतीति। य् व् र् ल् इत्येतेषां मध्ये यः सदृशतमः अस्ति सः भविष्यति। अर्थात् अत्र आदेशस्य सदृशतमत्वं स्वीक्रियते। तदुक्तं भगवता पतञ्जलिना- 'यथा पुनरियमन्तरतमनिवृत्तिः, सा किं प्रकृतितो भवति- स्थानिन्यन्ततमे षष्ठीति। आहोस्विदादेशतः स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति। कुतः पुनरियं

विचारणा। उभयथा हि तुल्या संहिता स्थानेऽन्तरतम उरण्रपरः इति।'[१३] महाभाष्ये बहुत्र पतञ्जलिः पूर्ववर्तिवृत्तिकाराणां योगविभागं न स्वीकरोति। स्वयमेव भिन्नरूपेण योगविभागं करोति। उदाहरणं यथा 'यञश्च'[१४] इति सूत्रस्य भाष्ये- 'नैवं विज्ञायते- कञक्वरपो यञश्चेति। कथं तर्हि। कञक्वरपोऽयञश्चेति।' एवमेव महाभाष्ये बहुत्र अष्टाध्यायी संहितारूपेणैव रचिता इति ध्वनिता। किञ्च संहितापाठस्वीक्रियते चेदेव योगविभागपरम्परा सिध्यति। पाणिनीयव्याकरणे बहुत्र योगविभागः स्वीक्रियते आचार्यैः। अधुना केवलं समासप्रकरणे स्वीकृताः योगविभागाः संक्षेपेण आलोच्यते-

**सह सुपा (पा.सू.- २.१.४)।**

प्रकृतं सूत्रमिदं विधिसूत्रमधिकारसूत्रञ्चास्ति। 'कडाराः कर्मधारये' इति सूत्रं यावत् अस्य अधिकारः वर्तते। अधिकारसूत्रेऽस्मिन् 'सुबामन्त्रिते पराङ्गवत् स्वरे'[१५] इति सूत्रात् सुप् इति पदमनुवर्तते। 'प्राक्कडारात्समासः' इति सूत्रात् समासः इति पदमनुवर्तते। तेन सम्पूर्णं सूत्रं भवति- सुप् सुपा सह समासः इति। 'समर्थः पदविधिः'[१६] इति सूत्रात् अनुवर्तमानं समर्थपदं तृतीयया विपरिणम्यते। 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणम्'[१७] इति परिभाषाबलात् सूत्रार्थो भवति- सुबन्तं समर्थेन सुबन्तेन सह समस्यते इति। वस्तुतः 'सह सुपा' इति सूत्रे सहग्रहणस्य आवश्यकता एव नास्ति। तथाहि- 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः'[१८] इति सूत्रे यूना सह इति सहयोगे तृतीया स्वीक्रियते। अत एव यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् इति सूत्रार्थः स्वीकृतः भट्टोजिदीक्षितेन। तथैव अत्रापि 'सुपा' एतावन्मात्रं सूत्रं क्रियते चेदपि न हानिः। यतो हि अत्रापि सुपा इत्यत्र सहयोगे तृतीया स्वीकर्तुं शक्यते। तेन सहग्रहणं विनापि सुपा सह इति लभ्यते। अतः 'सह सुपा' इति प्रकृतसूत्रे सहग्रहणं व्यर्थम्।

ननु सहभूतयोः एव समाससंज्ञाविधानार्थमत्र सहग्रहणम्। अत्र प्रश्नः भवति यत् सहग्रहणं न क्रियते चेत् कथं प्रत्येकं पदस्य समाससंज्ञा प्राप्नोति। यतो हि समाससंज्ञा तु एकार्थीभावे विधीयते। किञ्च 'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः'[१९] इति न्यायेनापि प्रधानरूपस्य समुदायस्यैव समाससंज्ञा भवति। किञ्च 'समुदायावयवसन्निधौ समुदाये कार्यसम्प्रत्ययः' इति न्यायादपि समुदायस्यैव समाससंज्ञा न तु प्रत्येकं पदस्य। यथा 'एकाचो द्वे प्रथमस्य'[२०] इत्यनेन एकाज्विशिष्टसमुदायस्यैव द्वित्वं विधीयते, न तु अवयवस्य। अन्वर्थसंज्ञाविधानाद्वा समुदायस्यैव संज्ञा स्यात्। तथाहि- समस्यते सम्बध्यते एकमन्येन इति समासः इति अन्वर्थसंज्ञा। सम्बन्धश्च द्विष्ठः। अतः समाससंज्ञा समुदायस्यैव न तु प्रत्येकं समस्यमानपदस्य। अत्रोच्यते- प्रत्येकं पदस्यापि समाससंज्ञा प्राप्नोति। यतो हि प्रत्यवयवं च वाक्यपरिसमाप्तिः दृश्यते। यथा- 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम्' इत्यादौ प्रत्येकमिति नोच्यते तथापि प्रत्येकं भुङ्क्ते। एवमेव वृद्धिसंज्ञा गुणसंज्ञा च प्रत्येकमेव भवति न तु समुदायस्यैव। तदुक्तं भाष्ये- 'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा इति। तद्यथा- वृद्धिगुणसंज्ञे भवतः।' इति। तथैव प्रकृतेऽपि समाससंज्ञा समस्यमानस्य प्रत्येकं पदस्य स्यात्। अतः सहभूतयोः समाससंज्ञाविधानार्थं सहग्रहणं क्रियते। प्रत्येकं पदस्य समाससंज्ञा नेष्टा। समाससंज्ञा तु सहभूतयोरेव भवति न तु प्रत्येकं पदस्य। भवतु प्रत्येकं पदस्य समाससंज्ञा। कोऽत्र दोषः स्यात्। इति चेदुच्यते- प्रत्येकं पदस्य समाससंज्ञायां दोषः स्यात्। यथा- ऋक्पाद इत्यादौ समासान्तप्रत्ययः प्राप्नोति। तथाहि- प्रत्येकं पदस्य समाससंज्ञायां ऋक्पाद इत्यादौ ऋच् इत्यस्मात् परम् 'ऋक्पूरब्धूःपथामानक्षे'[२१] इति सूत्रेण अ इति समासान्तप्रत्ययो भविष्यति। तदा ऋचपाद इत्यादिरूपं भविष्यति। राजाश्वः इत्यादौ प्रत्येकं पदस्य समाससंज्ञायां उभयोः पदयोः समासान्तोदात्तत्वं स्यात्। राजाश्वः इत्यत्र समासान्तप्रत्ययेऽपि रूपभेदाभावो दृश्यते। अतः अत्र स्वरद्वयप्रसङ्गरूपदोषः प्रदर्शितः। ऋक्पाद इत्यादावपि स्वरद्वयप्रसङ्गरूपदोषस्तु अस्त्येव। अतः प्रत्येकं पदस्य समाससंज्ञा यथा न स्यात्तदर्थं सूत्रे सहग्रहणं कृतम्। तदा उच्यते

ननु समुदायेऽपि वाक्यपरिसमाप्तिर्दृश्यते। यथा- गर्गाः शतं दण्ड्यन्ताम् इत्यादौ राजानः न प्रत्येकं दण्डयन्ति अपि तु समुदायमेव दण्डयन्ति। एवं समुदायप्रत्येकग्रहणपक्षद्वये स्थिते प्रयोजनवशात् कश्चित् क्वचित्पक्षः आश्रीयते। एवं तत्र यथा विनापि प्रत्येकग्रहणं लक्ष्यदर्शनादिवशात् प्रत्येकं गुणवृद्धिसंज्ञे भवतः तथैवात्रापि अन्तरेण सहग्रहणं समुदायस्य समाससंज्ञा भविष्यति। लक्ष्यानुरोधादेव समासपदं तत्समूहपरमिति भावः। अतः सहग्रहणस्य आवश्यकता नास्ति।

**योगविभागार्थं सहग्रहणम्।**

सहग्रहणं विनापि केवलं सुपा इति सूत्रं क्रियते चेदपि लक्ष्यसिद्धिर्भवति। वृद्धो यूना इत्यादिवत्। अत्र सहग्रहणं व्यर्थीभूय ज्ञापयति यत्- अत्र योगविभागार्थं सहग्रहणं कृतमस्तीति। तदुक्तं भाष्यकारेण- 'एवं तर्हि सिद्धे सति यत्सहग्रहणं करोति तस्यैतत्प्रयोजनम्- योगाङ्गं यथा विज्ञायेत। सति च योगाङ्गे योगविभागः करिष्यते' इति। अत्र योगशब्दस्यार्थः भवति अष्टाध्यायीग्रन्थः। यद्यपि योगविभागः न क्रियते चेदपि अवयवावयवस्य समुदायावयवत्वन्यायेन अष्टाध्याय्यवयवत्वम् अस्त्येव तथापि साक्षादवयवत्वमेव अत्र विवक्षितम्। तच्च योगविभागं विना न सम्भवति। एवञ्च योगविभागे 'सह' इति एकं सूत्रम्। 'सुपा' इति अपरं सूत्रम्। तत्र प्रथमसूत्रस्य अर्थो भवति- सुबन्तं समर्थेन सह समस्यते इति। अर्थात् सुबन्तं येन केनापि समर्थेन सह समस्यते। तेन अनुव्यचलत् इत्यादौ समासः सिध्यति। तथाहि- 'वि' इति सुबन्तस्य 'अचलत्' इति तिङन्तेन सह समासे व्यचलत् इति भवति। तदनन्तरम् अनु इति सुबन्तेन सह व्यचलत् इत्यस्य समासे अनुव्यचलत् इति रूपं सिध्यति। 'योगविभागादिष्टसिद्धिः' इति परिभाषाबलात् यत्र वैदिकप्रयोगे सुबन्तस्य तिङन्तेन सह समासः दृश्यते तत्रैव अनेन सूत्रेण समासः सिध्यति, न तु सर्वत्र। द्वितीयसूत्रस्यार्थो भवति- सुबन्तं समर्थेन सुबन्तेन समस्यते इति। 'सुपा' इति द्वितीयसूत्रमधिकारसूत्रमस्ति तथा विधिसूत्रमपि अस्ति। अधिकारबलात् लोके सुबन्तं तिङन्तेन न समस्यते। तेन 'न गच्छति' इत्यादौ न समासः। विधिसूत्रबलात् भूतपूर्वः इत्यादौ शिष्टप्रयोगे समासः भवति यत्र समासविधायकं सूत्रं नास्ति।

अत्र सहग्रहणं विनापि समुदायस्य समाससंज्ञा सिद्धे पुनः सहग्रहणं योगविभागार्थमेवास्ति इत्यत्र नास्ति वैयाकरणानां वैमत्यम्। काशिकाकारः, पदमञ्जरीकारः, सिद्धान्तकौमुदीकारः, बालमनोरमाकारः, तत्त्वबोधिनीकारः, नागेशः एते सर्वे वैयाकरणाः अत्र योगविभागं स्वीकृतवन्तः। योगविभागं विना पर्यभूषयत्, अनुव्यचलत् इत्येतेषां सिद्धिःनैव सम्भवति। अतः अत्र योगविभागः अवश्यं स्वीकार्यः।

**तृतीया तत्कृतार्थेन गुणवचनेन (पा.सू.- २.१.३०)।**

तत्कृत इति लुप्ततृतीयान्तनिर्देशः अस्ति। अत्र 'छन्दोवत् सूत्राणि भवन्ति' इत्यनुसारं 'सुपां सुलुक्पूर्वसवर्णाऽच्छेयाडाड्यायाजालः'[22] इति सूत्रेण तृतीयैकवचनस्य टा-प्रत्ययस्य लुक् जातः। तत्कृतेन इति तृतीयान्तस्य अन्वयः अर्थेन इत्यनेन अव्यवहितेन सह न भवति अपि तु गुणवचनेन इत्यनेन सह भवति। अर्थात् तत्कृतेन इति गुणवचनेन इत्यस्य विशेषणमस्ति। तत्कृतेन इत्यत्र तच्छब्देन यद्यपि पूर्वनिर्दिष्टस्य तृतीयान्तपदस्य ग्रहणं भवति तथापि अत्र लक्षणया तृतीयान्तार्थः स्वीक्रियते। यतो हि तृतीयान्तपदद्वारा कोऽपि गुणः कर्तुं न शक्यते। अतः तृतीयान्तपदस्य अर्थः अत्र ग्राह्यः। तृतीयान्तपदार्थद्वारैव गुणः कर्तुं शक्यते न तु तृतीयान्तपदेन। गुणमुक्तवान् इति गुणवचनः शब्दः। 'कृत्यल्युटो बहुलम्'[23] इति सूत्रानुसारमत्र भूतकाले कर्तरि अर्थे ल्युट्-प्रत्ययो जातः। यः शब्दः पूर्वं गुणवाची आसीत् परन्तु अधुना द्रव्यवाची अस्ति सः शब्दः गुणवचनः इति उच्यते। अर्थात् केचनशब्दाः पूर्वं गुणे अर्थे प्रवर्तते स्म, गुणगुणिनोः अभेदोपचारात् अथवा मतुप्प्रत्ययस्य लुग्बलात् ते शब्दाः तद्गुणविशिष्टद्रव्यवाचकाः

भवन्ति। ते शब्दा एव गुणवचनाः इति कथ्यन्ते। उदाहरणं यथा- श्वेतशब्दः श्वेतगुणवाचकः अस्ति परन्तु गुणगुणिनोः अभेदोपचारात् अथवा 'गुणवचनेभ्यो मतुबो लुगिष्टः' इति वार्त्तिकानुसारं मतुप्प्रत्ययस्य लुकि कदाचित् श्वेतशब्दः श्वेतगुणविशिष्टद्रव्यवाचकः भवति। यथा श्वेतो धावति इत्यादौ श्वेतशब्दः श्वेतगुणविशिष्टाश्ववाचकः अस्ति। अतः श्वेतो धावति इत्यादौ श्वेतशब्दः गुणवाचकोऽस्ति। अस्मिन् सूत्रे तृतीया इत्यनेन 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणम्'[२४] इति परिभाषाबलात् तृतीयान्तं परामृश्यते। तेन सूत्रार्थो भवति- तृतीयान्तं सुबन्तं तत्कृतेन गुणवचनेन सुबन्तेन अर्थेन सुबन्तेन च विभाषया समासः स्यादिति। अस्मिन् सूत्रे समासविधायकं वाक्यद्वयं भवति। तथाहि-१) तृतीया तत्कृतेन गुणवचनेन सुबन्तेन वा समस्यते। २) तृतीया अर्थप्रकृतिकेन सुबन्तेन सह वा समस्यते चेति। तत्र प्रथमवाक्यस्यार्थो भवति- तृतीयान्तपदस्य तृतीयान्तपदार्थद्वाराकृतः यः गुणः तद्विशिष्टपदार्थवाचकेन सुबन्तेन सह विकल्पेन समासो भवति। उदाहरणं यथा- सुधया धवलं सुधाधवलं भवनम् इत्यादि। अक्ष्णा काणः, पादेन खञ्जः इत्यादौ न समासः यतो हि काणत्वं नात्र अक्ष्णा कृतमपि तु अन्येन केनापि रोगविशेषेण कृतम्। एवमेव खञ्जत्वमपि न पादेन कृतम्। घृतेन पाटवम् इत्यादौ अपि न समासः। यतो हि घृतेन पाटवम् इत्यत्र यद्यपि पाटवम् इति शब्दः गुणवाचिशब्दः अस्ति परन्तु गुणवचनशब्दः नास्ति। पाटवम् इति शब्दः पूर्वं गुणवाची आसीत्, अधुनापि गुणवाचिशब्द एव अस्ति, न तु गुणविशिष्टद्रव्यवाची। गुणवचनशब्दः स एव भवति यः भूतपूर्वगुणवाचिशब्दः अधुना द्रव्यवाची अस्ति। तदुक्तं नागेशेन- 'गुणोपसर्जनद्रव्यवचनेनैव समासः' इति। द्वितीयवाक्यस्य अर्थो भवति- तृतीयान्तपदस्य अर्थप्रकृतिकसुबन्तेन सह विकल्पेन समासो भवतीति। उदाहरणं यथा- धान्येनार्थः धान्यार्थः इत्यादि। धान्यहेतुकं धनमित्यर्थः।

**अर्थपदग्रहणस्य फलम्- योगविभागः।**

तत्कृतः अर्थः अभिधेयः यस्य गुणवचनस्य इति विग्रहं स्वीक्रियते चेत् अत्र अर्थग्रहणं न कर्तव्यं यतो हि तत्कृतेन गुणवचनेन इत्युक्ते तत्कृतगुणस्य वाचकेन इत्यर्थप्रतीतिः अवश्यमेव भवति। सामर्थ्यलभ्यस्यापि यदि विस्पष्टार्थम् उपादानमिति उच्यते तर्हि तृतीयार्थनिर्देशोऽपि कर्तव्यः। अर्थात् 'तृतीया तदर्थकृतार्थेन' इति वक्तव्यम्। अत एव प्रकृतसूत्रे अर्थग्रहणस्य आवश्यकता नास्ति। अत्रोच्यते प्रकृतसूत्रे अर्थशब्दः न अर्थपरत्वम् अस्ति अपि तु शब्दपरत्वमेव अस्ति। यतो हि तृतीयार्थः तथा गुणवचनार्थः उभयत्रापि अर्थपरत्वस्य अवचनादपि सिध्यति। अर्थात् व्याख्यानेनैव अर्थगतिर्भविष्यति। अर्थशब्दस्य शब्दपरत्वे फलं हि योगविभागः। अर्थात् योगविभागेनात्र सूत्रद्वयं स्वीक्रियते- १) 'तृतीया तत्कृतेन गुणवचनेन' इत्येकं सूत्रम्। २) 'अर्थेन' इति अपरं सूत्रम्। तदुक्तं भाष्यकारेण- 'योगाङ्गमिदं निर्दिश्यते। सति च योगाङ्गे योगविभागः करिष्यते- तृतीया तत्कृतेन गुणवचनेन समस्यते। ततः अर्थेन अर्थशब्देन च तृतीया समस्यते। धान्यार्थः वसनार्थः हिरण्यार्थः। पूर्वसदृशसमोनार्थ इत्यर्थग्रहणं न कर्तव्यं भवतीति'। वस्तुतः प्रकृते योगविभागशब्देन वाक्यभेद एव विवक्षितः। योगविभागः स्वीक्रियते चेदेव वाक्यभेदः सम्पद्यते। न चान्तरेण वाक्यभेदं धान्यार्थः इत्यादौ अर्थशब्देन सह तृतीयान्तस्य समासः सिध्यति।

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (पा.सू.- २.१.३६)।**

प्रकृतसूत्रे पदद्वयं वर्तते। तत्र चतुर्थी इति प्रथमान्तं पदम् अनुवर्तमानस्य सुप् इति प्रथमान्तपदस्य विशेषणम् अस्ति। तदर्थार्थबलिहितसुखरक्षितैः इति तृतीयान्तं पदम् अनुवर्तमानस्य सुपा इति तृतीयान्तपदस्य विशेषणम् अस्ति। तेन सूत्रार्थो भवति- तदर्थार्थबलिहितसुखरक्षित-इत्येतैः सुबन्तैः सुब सह चतुर्थ्यन्तं सुबन्तं वा समस्यते इति। 'यूपदारु', 'द्विजार्थः', 'भूतबलिः', 'गोहितम्', 'गोसुखम्', 'गोरक्षितम्' इत्याद्यत्रोदाहरणम्। तदर्थ इत्यत्र तच्छब्देन

चतुर्थ्यन्तपदस्य अर्थः परामृश्यते। तस्मै इदं तदर्थमिति विग्रहः। अर्थात् चतुर्थ्यन्तपदस्य यः अर्थः तस्मै यत्, तत् तदर्थम्। तदर्थार्थबलिहितसुखरक्षित-इत्येतैः सुबन्तैः सुब सह चतुर्थ्यन्तं सुबन्तं वा समस्यते इत्यर्थः। 'यूपदारु', 'द्विजार्थः', 'भूतबलिः', 'गोहितम्', 'गोसुखम्', 'गोरक्षितम्' इत्याद्यत्रोदाहरणम्।

अत्र शङ्का भवति यत्, यथा 'यूपाय दारु यूपदारु' इत्यादौ समासः प्रकृतसूत्रेण सिध्यति तथैव 'रन्धनाय स्थली', 'अवहननाय उलूखलम्' इत्यादौ समासः अनेन सूत्रेण कथं न भवतीति। अत्रोच्यते- तदर्थशब्देनात्र न सर्वेषां तदर्थानां ग्रहणम्, अपि तु प्रकृतिविकृतिभावः एव गृह्यते। अत्र ज्ञापकं हि प्रकृतसूत्रे बलिरक्षितग्रहणम्। यतो हि यदि तदर्थशब्देनैव सर्वेषां तदर्थानां ग्रहणं स्यात् तर्हि सूत्रे पुनः बलिरक्षितग्रहणं न स्यात्, तादर्थ्यस्य सम्भवात् तदर्थग्रहणेनैव समासस्य सिद्धत्वात्। हितसुखग्रहणं तु न ज्ञापकं यतो हि हितसुखयोगे 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः'[२५] इत्यनेन सूत्रेण अतादर्थ्येऽपि चतुर्थी सम्भवति। अतः प्रकृतसूत्रे बलिरक्षितग्रहणेनैव ज्ञायते यत् अत्र तदर्थशब्देन प्रकृतिविकृतिभाव एव गृह्यते। अर्थात् यत्र चतुर्थ्यन्तपदार्थः विकृतिः, तथा तदर्थवाचकपदार्थः प्रकृतिः अस्ति तत्रैव प्रकृतसूत्रेण समासः भवति। उदाहरणं यथा 'यूपाय दारु यूपदारु' इत्यादि। प्रकृते उदाहरणे यूपः इति विकृतिः तथा दारु इति तस्यैव यूपस्य प्रकृतिः अस्ति। अतः अत्र प्रकृतिविकृतिभावसत्त्वात् प्रकृतसूत्रेण समासः जातः। एवमेव 'कुण्डलाय हिरण्यं कुण्डलहिरण्यम्' इत्यादावपि बोध्यम्। परन्तु यत्र प्रकृतिविकृतिभावो नास्ति तत्र प्रकृतसूत्रेण समासो न भवति। यथा 'रन्धनाय स्थाली' इत्यादौ न समासः। अत्र स्थाली तदर्थं तु अस्ति परन्तु प्रकृतिविकृतिभावो नास्ति। अतः अत्र न समासः। एवमे 'पूजायै पुष्पम्', 'यशसे काव्यम्' इत्यादावपि प्रकृतिविकृतिभावाभावात् न समासः। ननु यदि अत्र तदर्थशब्देन प्रकृतिविकृतिभाव एव गृह्यते तर्हि अश्वघासः इत्यादौ कथं समासः। अत्रोच्यते- अश्वघासः इत्यादौ तु अश्वानां घासः इति षष्ठीसमासः। अत्र प्रश्नः भवति यत् 'आत्मनेपदम्' 'आत्मनेभाषा' इत्यादौ कथं समासः भवति। अत्रोच्यते प्रकृतसूत्रे योगविभागः स्वीक्रियते। योगविभागः स्वीक्रियते चेत् सूत्रद्वयं सम्पद्यते। तेन 'चतुर्थी' इत्येकं सूत्रम्। 'तदर्थार्थबलिहितसुखरक्षितैः' इति द्वितीयं सूत्रम्। चतुर्थी सुबन्तेन सह समस्यते इत्यर्थकेन प्रथमसूत्रेणैव 'आत्मनेपदम्' इत्यादौ समासः सिध्यति।

**उपसंहारः**

सर्वप्रथमं पाणिनिः स्वयमेव योगविभागं कृत्वा सूत्रान् शिष्येभ्यः उपदिदेश। परन्तु परवर्तिवैयाकरणैः इष्टसिध्यर्थं पाणिनीयसूत्राणां पुनः योगविभागः कृतः। येषां शब्दानां सिद्धिप्रक्रिया पाणिनीयसूत्रेण न सिध्यति तेषां शब्दानां सिध्यर्थं योगविभागाद्युपायाः आश्रियन्ते। 'योगविभागाद् इष्टसिद्धिः' इति परिभाषानुसारमिष्टस्य शब्दस्य साधुत्वप्रतिपादनार्थमेव योगविभागः क्रियते न त्वनिष्टस्य सिद्धये। तत्र वार्त्तिककारेण एकत्रिंशत् योगविभागाः स्वीकृताः। महाभाष्यकारेण वार्त्तिककारोक्तान् योगविभागान् विहाय अष्टपञ्चाशत् नूतनाः योगविभागाः प्रदर्शिताः। काशिकाकारेण षट्त्रिंशत् योगविभागाः प्रदर्शिताः। तेषु विंशतिः योगविभागाः तस्य स्वकीयाः, चत्वारः वार्त्तिककारात्, द्वादश महाभाष्यकारादुद्धृताः। भाषावृत्तौ पुरुषोत्तमदेवेन सप्तदशयोगविभागाः स्वीकृताः। तेषु केवलं षट् तस्य स्वकीयाः। भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां सप्तविंशतिः योगविभागाः स्वीकृताः। तेषु सप्त एव तस्य स्वकीयाः, चत्वारः वार्त्तिककारात्, षट् महाभाष्यात्, दश काशिकातः स्वीकृताः। प्रबन्धेऽस्मिन् केवलं समासाधिकारे स्वीकृताः योगविभागाः संक्षेपेण आलोचिताः इति शम्।

**संकेतपञ्जिः**

ऋ.वे. = ऋग्वेदः

धा.सं. = धातुसंख्या

पा. सू. = पाणिनीयसूत्रम्

म.भा. = महाभाष्यम्

वा. = वार्त्तिकम्

वा. प. = वाक्यपदीयम्

सम्पा. = सम्पादकः

**उल्लेखपञ्जिः**

१. पा.सू.- २.१.३

२. *तदेव*.- २.२. ३८

३. *तदेव*.- ६.३.७

४. *तदेव*.- ६.३.७६

५. वा.प.- १.१३

६. ऋ.वे.१.६.३०.७

७. दिवादिः, धा.सं- ७४

८. पा.सू.- ३.३.१८

९. रुधादिः- धा.सं.- ७

१०. चुरादिः- धा.सं.- ३३८

११. पा.सू.- ३.३.११७

१२. आकडारादेकासंज्ञा इति सूत्रभाष्यम्- पृ.सं.- १९१(द्वितीयखण्डः)

१३. स्थानेऽन्तरतमः इति सूत्रभाष्यम्- पृ.सं.- ४१५(प्रथमखण्डः)

१४. पा. सू.- ४.१.१६

१५. *तदेव*.- २.१.२

१६. *तदेव*.-२.१.१

१७. परिभाषा-२३

१८. पा.सू.- १.२.६५

१९. परिभाषा- १०६

२०. पा.सू- ६.१.१

२१. *तदेव*.- ५.४.७४

२२.*तदेव*.-७.१.३९

२३. *तदेव*.-३.३.११३

२४. परिभाषा-२३

२५. पा.सू.-२.३.७३

**परिशीलितग्रन्थपञ्जिः**


आचार्यः, रामचन्द्रः। *प्रक्रियाकौमुदी (प्रकाशव्याख्यासहिता)*। सम्पा. पण्डितश्रीमुरलीधरमिश्रः। वाराणसी : चौखम्बा कृष्णदास अकादमी, २०००।

नागेशभट्टः। *परिभाषेन्दुशेखरः (सुबोधिनीव्याख्योपेतः)*। सम्पा. श्रीविश्वनाथमिश्रः। वाराणसी : चौखम्बा सुरभारती प्रकाशन, २०१४।

___। *लघुशब्देन्दुशेखरः (टीकाषट्कोपेतः, खण्डद्वयम्)*। सम्पा. बालशास्त्री। वाराणसी : चौखम्बा सुरभारती प्रकाशन, २०१३।

___। *वैयाकरणसिद्धान्तमञ्जुषा*। सम्पा. कालिकाप्रसादः शुक्लः। वाराणसी : सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, १९७७।

पतञ्जलिः। *व्याकरणमहाभाष्यम् (भावबोधिनी हिन्दीव्याख्योपेतम्, खण्डद्वयम्)*। सम्पा. जयशङ्करलालः त्रिपाठी। वाराणसी : कृष्णदास अकादमी, २०१३।

___। ___ *(भाष्यप्रदीपोद्यतसहितम्)*। सम्पा. भार्गवशास्त्री जोशी। दिल्ली : चौखम्बा संस्कृत प्रतिष्ठान, २०१४ (पुनर्मुद्रणम्)।

पाणिनिः। *अष्टाध्यायी*। सम्पा. गोपालदत्तपाण्डेयः। वाराणसी : चौखम्बा सुरभारती प्रकाशन, २०१७। (चौखम्बा सुरभारती ग्रन्थमाला १९)।

___। ___। सम्पा. तपनशङ्कर-भट्टाचार्य्यः। कलकाता : संस्कृत वुक डिपो, २००५।

___। *अष्टाध्यायीसूत्रपाठः*। सम्पा. रमाशङ्करमिश्रः। दिल्ली : मोतिलाल बनारसीदास, २००५।

___। *पाणिनीयशिक्षा*। सम्पा. विद्यासागरदामोदरमहतो। दिल्ली : मोतिलाल बनारसीदास, २००२ (पुनर्मुद्रणम्), १९९० (प्रथमसंस्करणम्)।

भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी (बालमनोरमा-तत्त्वबोधिनीसहिता, चत्वारः खण्डाः)*। सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। वाराणसी : मोतीलाल बनासरीदास, २०१०।

भर्तृहरिः। *वाक्यपदीयम् (प्रतिभाहिन्दीव्याख्योपेतम्)*। सम्पा. सत्यनारायणः खण्डुडी। वाराणसी : चौखम्बा कृष्णदास अकादमी, २०१४।

वामन-जयादित्यः। *काशिका (न्यास-पदमञ्जरी-भावबोधिनी-सहिता, दश खण्डाः)*। सम्पा. जयशङ्करलालः त्रिपाठी। वाराणसी : तारा प्रिंटिंग वर्क्स, १९८५।

श्रीकौण्डभट्टः। *बृहद्वैयाकरणभूषणम्*। सम्पा. श्रीमनुदेवः भट्टाचार्यः। वाराणसी : चौखम्बा अमरभारती प्रकाशन, १९८५।

___। *वैयाकरणभूषणसारः (सावित्रीव्याख्योपेतः)*। सम्पा. आद्याप्रसादमिश्रः। वाराणसी : सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, १९८८।

हालदार, गुरुपद। *व्याकरणदर्शनेर इतिहास*। कलकाता : कालीघाट, १३५० वङ्गाब्दः।

# विधुभूषण-भट्टाचार्यस्य ब्रह्मविषयसिद्धान्तमवलम्ब्य ब्रह्मसिद्धान्तचर्चा

तापस-वर्मनः

**सारसंक्षेपः**

जीवनस्य किं प्रयोजनं किं च जीवनस्य अर्थः बहुभिः मुनिभिः उक्तम्। परन्तु ते अनेकेषु विस्तृतेषु सुविचारितेषु खण्डेषु विभक्ताः सन्ति । जीवनस्य परमं लक्ष्यं सुखम् इति सर्वेषां स्वीकृतम् । वयं सर्वदा सुखं कामयामः न च कदापि दुःखम्। केनोपायेण दुःखं वर्जनीयम् ? विविधश्रुतिषु उपनिषत्सु च ब्रह्मज्ञानेनैव दुःखं वर्जनीयम् ।अस्य ब्रह्मणः स्वरूपम् तथा तटस्थलक्ष्मणरूपेण द्वौ भागौ प्राप्येते। ब्रह्मणः यत् स्वरूपं दृश्यते, न तु सर्वदा ब्रह्म, तत् ब्रह्मणः तटस्थलक्षणम्। जगत् न ब्रह्मणो विषयः सत्यं सत्यम् एकविधम् अन्यत् चेत् अनृतम् उच्यते। अन्यथा भासते चेत् विवर्त इति। यथा कश्चित् जनः राज्ञः दशरथस्य भूमिकायाम् अभिनयं करोति तदा जनस्य वास्तविकतादात्म्यम् तस्य स्वरूपलक्षणम् इति वक्तुं शक्यते। किन्तु अभिनये राज्ञः दशरथस्य तादात्म्यं तस्य तटस्थलक्षणम्। सच्चिदानन्दस्वरूपो अर्थात् ब्रह्म सत्स्वरूपम्, चित्स्वरूपम् आनन्दस्वरूपम् चेति सन्दर्भे ब्रह्मणः स्वरूपलक्ष्मणम् उक्तम्। सत्शब्दस्य अस्तित्वं, चित्शब्दस्य चैतन्यं ज्ञानं वा, आनन्दशब्दस्य अर्थः ब्रह्मसंयोगजन्य दिव्यानन्दस्य भावः । प्रामाणिक्यं सुखानन्दं च ब्रह्मणः गुणाः न सन्ति। सत्-चित-आनन्द-सह ब्रह्मणः विशेष्य-विशेषण-सम्बन्धः नास्ति इति यावत् । एते ब्रह्मणः स्वरूपलक्षणाः अर्थात् तेषां माध्यमेन ब्रह्मस्वरूपं साक्षात्करणीयम्। एतैः पदत्रयैः ब्रह्मणः कदापि लक्षणं न भवति। ब्रह्म सत्स्वरूपम् अस्तित्ववरूपं वा - अस्य अर्थः अस्ति यद् ब्रह्म असत्यं नास्ति । ब्रह्म कदापि अभावपदार्थः न भवितुमर्हति। यतः अभावात् कदापि भावः न भवितुम् अर्हति। तेन ब्रह्मणो सत्त्वनिराकरणं न सम्भवति ।ब्रह्म चितं चैतन्यस्वरूपम् वा - अस्य अर्थः अस्ति यत् ब्रह्म अचित् अर्थात् असंज्ञानात्मकम्। ब्रह्म चैतन्यं ज्ञानं च प्रकटीकरणम्। सः आत्मानं प्रकाशयति। एवं ब्रह्म चैतन्यं वा सर्वदा प्रकटितम्। ब्रह्मस्वरूपं किम् अस्मिन् शोधपत्रे प्रकाशते।

**कुञ्चिकाशब्दः**

*स्वरूपम्,आत्मा, ब्रह्म, शब्दः, उपनिषद्* ।

शाश्वतकर्मकामात् शरीरात्मानुभूतिरूपात् अन्तःकरणस्य अभावात् जीवः जन्ममरणप्रवाहे पुनः पुनः आवर्तते । तस्माद् संसारलोकात् उद्धाराय दयालू श्रुत्युपनिषदौ आत्मतत्त्वस्य उपदेशं दत्तवन्तौ स्तः। जीवस्य मोक्षस्य एकमात्र मार्ग आत्मा ज्ञातव्यः । अत एव उच्यते – आत्मानं वृद्धिः।

आत्मतत्वस्य प्रचारः विविधोपनिषत्सु गीतासु च भवति। आत्मा ब्रह्म च पर्यायवाची। अत्- धातोः मनिन्-प्रत्यययोगेण आत्मन्-शब्दो निष्पन्नः। अत्-धातोः गतिः सर्वगतिः वा इत्यर्थः । तस्माद् सर्वगतो सर्वव्यापी वा आत्मा। आचार्यशङ्करेणापि कृते वेदान्तदर्शनभाष्ये ब्रह्मशब्दार्थं वदितुं काले उक्तम् – 'ब्रह्मशव्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयः अर्थाः प्रतीयन्ते बृहतेर्धातोरर्थानुगमात् बृह्-धातोः मनिन्-प्रत्ययेण ब्रह्मशब्दः सिध्यति इत्यर्थः'[१]। आचार्येण विधुभूषण-भट्टाचार्येण उक्तम् – 'यद् महत्तमम्, अतः ब्रह्म - अयं ब्रह्मशब्दार्थः। देशेन कालेन वा अतितः, अतः शाश्वतः। कालातिरिक्तं नित्यं ध्रुवं महत्तमं निर्दोषं शुद्धं वा। ब्रह्म शुद्धम्, अविद्यादिदोषशून्यम् इत्यर्थः, अत एव स्वप्रतिपादितम्'[२]। अतः आचार्य भर्तृहरि ब्रह्मस्वरूपशब्दं आह्वयति तदा शब्दे नित्यत्वमित्यर्थः इति गम्यते।

आचार्येण भर्तृहरिणा उक्तम् –

> अनादिनिधनं ब्रह्म शव्दतत्त्वं यदक्षरम्।
> विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।[३]

अतः शब्दः ब्रह्म अस्ति। शब्दस्योत्पत्तिविनाशाभावात्। इदं नामविशिष्टं विचित्रं विश्वं केवलं शब्दस्यैव अज्ञेयस्थितिः अर्थात् शब्दत्वेन ब्रह्मणः। आचार्येण भर्तृहरिणा उक्तमेतत् उदाहरणं शब्दानां स्थायित्वं प्रतिपादयति न संशयः। आचार्येण विधुभूषण-भट्टाचार्येण उक्तम् – 'यद् वयं सामान्यतः शब्दं वदामः, तद् नित्यं न दृश्यते। यतः वक्तुः स्वर-तालु-आदि-प्रभावात् यः शब्दः उच्चारितः भवति, अस्माकं कर्णयोः प्रविशति च, सः शब्दः इति वदामः । इदं रूपं शब्दोच्चारणापूर्वं न अनुभूयते, उक्त्यानन्तरम् अपि न तिष्ठति। अतः उत्पत्तिविनाशकः तादृशः शब्दः शाश्वतः न भवितुम् अर्हति'[४]। विशेषतः भर्तृहरिणा शब्दः ब्रह्म उच्यते। सर्वव्यापकं वृहत्तमं वा यत्किमपि देशस्य कालस्य वा सीमायां न निरुद्धं तत् उपनिषत्सु ब्रह्म उच्यते। छान्दोग्योपनिषदि वर्णितम् – 'भूमा इति अवस्था यस्मिन् अन्यत् न पश्यति, अन्यत् किमपि न शृणोति, अन्यत् किमपि न जानाति'[५]। आचार्येण विधुभूषण-भट्टाचार्येण उक्तम् – 'यद् मनसा लीनं भवति तत् जगत् मनसा परं शुद्धं ब्रह्म सत्ता। अतः यावद् मनसादवस्थायां जीवति तावत् ब्रह्मसत्तां विविधं विखण्डितं च अनुभवितुं शक्यते। अयं आत्मा ब्रह्म इति कथ्यते'[६]।

महर्षिणा याज्ञवल्क्येनापि बृहदारण्यकोपनिषदः चतुर्थेऽध्यायस्य चतुर्थे ब्राह्मणे आत्मतत्वस्य उपदेशः दीयते।आत्मा ब्रह्म वा एकमेव अद्वितीयम्। स नित्यः शुद्धः बुद्धः मुक्तः अजरः अमरः निर्गुणः च। न लयस्तस्य, अविनाशी, आत्मनः रूपमिदं निरुपाधिकरूप उच्यते। अयं आत्मा यदा पुनः शरीरचित्तादिभिः सह सम्बद्धः भवति तदा सोपादिकात्मा इति उच्यते । प्रत्येकं उपनिषद् विविधरूपेण एतयोः रूपयोः कथयति ।

बृहदारण्यकोपनिषदि ब्रह्मणः रूपद्वयं उल्लेखितम् अस्ति। एकः सगुणः अपरः निर्गुणः।

सर्वादौ उच्यते - स वा अयं आत्मा ब्रह्म[७]। अर्थात् आत्मा वस्तुतः ब्रह्म एव। विविधोपाधिभेदेन आत्मा विविधारूपेषु दृश्यते । आदौ आत्मनः सोपाधिकरूपाः उल्लिखिताः –

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय प्राणमयश्चक्षुमयः श्रोत्रमयः पृथिवीमय आपमयो वायुमय आकोशमयस्तेजमयः अतेजमयः काममयोऽकामयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्ममयस्तद् यदेतद् इयंमयः अदोमय इति यधाकारी यधाचारी तथाभवति साधुकारी साधुभवति पापकारी पापभवति पुण्यः पुण्येन कर्मणा भवति पाप पापेन[८]।

अर्थात् आत्मा विज्ञानमय, विज्ञानस्य धर्मः आत्मनि आरोपगतः आत्मा वैज्ञानिकः इव भासते। तादृशैः मनरूपसंज्ञाभिः सह सम्बद्धे आत्मा मनोमयः भासते । एवं पञ्चप्राणसंबद्धे प्राणामयत्वेन चक्षुःसंबद्धे चक्षुषीरूपं दृश्यते । एवं पार्थिवद्रव्योत्पत्तौ आत्मा पृधिवीमयः भासते, जलसृष्टौ, आत्मा अपोमयः वायुसृष्टौ आत्मा वायुमयः आकाशसृष्टौ काले आकाशमयः देवानुकूलस्य तैजसशरीरस्य उत्पत्तिस्थाने आत्मा तेजमयः, पशुशरीरस्य निर्माणकाले नरकादिलोकस्य च निर्माणकाले आत्मा अतेजमयः इति प्रतिभासते। आत्मा कर्मणानुसारेण फलं भुङ्क्ते। अतः एक आत्मा नामानुसारेण विविध इति भासते। फलतः एकस्य रूपस्य अन्यस्य रूपस्य च भेदः कल्प्यते । ईशदोपनिषदि आत्मानः एताः सोपाधिरूपाः उक्ताः

अनेजदेकं मनसो जवीयो
नैनद्देवा आप्नुवन् पूर्वमर्षत्।
तद्वावतोऽन्यानत्येति तिष्ठत्
तस्मिन्नपो मातरिश्वा दधाति।।[९]

याञ्जवल्क्येन आत्मानः निरुपाधिकस्वरूप-सम्वन्धे उक्तम् –

> स वा एष महानज आत्माऽजरोऽमरोऽभयः।
> ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद।।[१०]

आत्मा ब्रह्म वा महद् सर्वबृहत् वा | अज वा जन्महीनः । अमरः मृत्युरहितः वा। सत्ता-बुद्धि-विपरिणामात्मनः भावविकारत्रयेण निषिद्धम्। आत्मा ब्रह्म वा नित्यं शाश्वतं च तस्य न कोऽपि विकारः। ईशदोपनिषदि आत्मायाः निर्गुणस्वरूपसम्वन्धे उच्यते -

> स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
> कविर्मनीषी परिभूः स्वयम्भूः...।।[११]

गीतायाम् उक्तम् –

> न जायते म्रियते वा कदाचिद्
> नायं भूत्वा भविता वा न भूयः।
> अजो नित्यः शाश्वतोऽयं पुरानो
> न हन्यते हन्यमाना शरीरे।।[१२]

स्वगुणनिर्गुणब्रह्मविषये आचार्येण विदुभूषण-भट्टाचार्येण उक्तम् - ब्रह्म विश्वं च केवलं मानसिकावस्थाभेदात् विविधभावनानां अधीनाः भवन्ति[१३]।

आत्मनः ब्रह्मणः वा सोपाधिकनिरुपाधिकयोः निरुपाधिकरूपं मूलम् । यावद् मनुष्येषु अचेतना वर्तते तावत् अस्माकं शरीरं बुद्धि इत्यादि मन्यते। यदा वास्तविकज्ञानस्य प्रभावेन अज्ञानं निवृत्तं भवति तदा आत्मानं ब्रह्म वा एकं अद्वितीयं च द्रक्ष्यति। न कश्चित् रूपगुणेन लक्षणीयः । अत एव उपनिषदेषु उक्तम्- एवं निर्गुणं ब्रह्म वा आत्मतत्त्वं वा निषेधमपेक्ष्य अभिप्रेतम्। तादृशं ब्रह्म सम्प्राप्य ब्रह्म भवति - ब्रह्मवेद ब्रह्मैव भवति[१४]।

**संकेतपञ्जिः**

अनु. = अनुवादकः

सम्पा. = सम्पादकः

**उल्लेखपञ्जिः**


१. वेदान्दर्शनम् (शङ्करभाष्यम्) – १.१.१

२. भट्टाचार्य, विदुभूषण, *आचार्य्य भतृहरिर शव्दतत्त्व*, विश्ववाणी, चत्वारिंशत् वर्षम्, पत्राङ्कः – ४११

३. भत्तृहरि, वाक्यपदीयम् – १.१

४. भट्टाचार्य, विदुभूषण,प्रागुक्तम्

५. छान्दोग्योपनिषद् – ७.१४.१

६. *अभेदानन्देर अद्वैतवाद,* विश्ववाणी,अष्टद्वाविंशतितमम् वर्षम्,पत्राङ्कः – ४९०

७.वृहदारण्यकोपनिषद् – ४.४.५

८. तदेव

९. ईशदोपनिषद्,मन्त्रः - ४

१०. वृहदारण्यकोपनिषद् – ४.४.२५

११. ईशदोपनिषद्,मन्त्रः – ८

१२. श्रीमद्भगवद्गीता – २.२०

१३. *अभेदानन्देर अद्वैतवाद,* विश्ववाणी,अष्टद्वाविंशतितमम् वर्षम्,पत्राङ्कः – ४९०

१४. मुण्डकोपनिषद् – ३.२.९

**परिशीलितग्रन्थपञ्जिः**

*ईशोपनिषद्*। अनुवादकः. स्वामी जुष्टानन्दः। कलकाता : उद्बोधन कार्जालयः, १९९२।

*उपनिषद् ग्रन्धावली*। सम्पा. स्वामी गम्भीरानन्द। कलकाता : उद्बोधन कार्जालयः, १९९७।

*बृहदायण्यकोपपनिषद्*। सम्पा. करुणासिन्धु दासश्च वेचाराम घोषश्च सुवुद्धिचरण गोस्वामी च। कलकाता : संस्कृत वुक डिपो, २००१।

भत्तृहरिः। *वाक्यपदीयम्*। सम्पा. मृणालकान्ति गङ्गोपाध्यायः। कलकाता : संस्कृत वुक डिपो, २०१८।

*मुण्डकोपनिषद्*। अनुवादकः. स्वामी जुष्टानन्दः। कलकाता : उद्बोधन कार्जालयः, १९९९।

*विश्ववाणी*। सम्पा. स्वामी अभेदानन्दः। कलकाता : वेदान्त आश्रमः, १९६५ (२८ बर्षम्)।

*वेदान्तदर्शनम्*। व्याख्या. स्वामी विश्वरूपानन्दः। कलकाता : उद्बोधन कार्जालयः, १९८०।

*श्रीमद्भगवद्गीता*। व्याख्या. स्वामी वासुदेवानन्द। कलकाता : उद्बोधन कार्यालय, २०००।

# धात्वर्थविषये प्राचीनवैयाकरणनये उत्थापितानां दोषाणां निराकरणम्

नयन-चौधुरी

**सारसंक्षेपः**

शाब्दबोधे शक्तिज्ञानं कारणम्। अतः शक्तिज्ञानं विना शाब्दबोधो न भविष्यति। धातोः क्व शक्तिः इति विषये प्रायः सर्वेष्वेव शास्त्रेष्वालोचना विद्यते। निबन्धेऽस्मिन् मया प्राचीनवैयाकरणमतमेव सिद्धान्तत्वेन स्वीकृतं वर्तते। तन्मते नव्यनैयायिकवैयाकरणाभ्याम् उद्भावितानां दोषाणां निराकरणं कृतं वर्तते। पुनः मया प्राच्यवैयाकरणसिद्धानसम्बन्धिन्यः काश्चन आक्षेपा उद्भाविताः, तासामाक्षेपाणां निरूपणं समाधानञ्च उपसंहारे कृतं वर्तते।

**कुञ्चिकाशब्दः**

व्यापारः, फलम्, धातुः, विशेष्यता, प्रकारता, अन्वयः, शक्यतावच्छेदकम्, शक्ततावच्छेदकम्।

**उपोद्घातः**

प्रायोऽचर्चितधात्वर्थविषयमेकमपि प्राच्यतन्त्रं नास्ति। महातीर्थेऽस्मिन् भारतभूखण्डे धात्वर्थविषये नानाविधानि मतानि प्राप्यन्ते। तत्र प्राचीननैयायिकमतम्, प्राचीननैयायिकैकदेशिमतम्, नव्यनैयायिकमतम्, मण्डनमिश्रमतम्, प्रभाकरमतम्, खण्डदेवमतम्, नव्यमीमांसकमतम्, नव्यवैयाकरणमतम्, प्राचीनवैयाकरणमतम् इत्यादीनि प्रसिद्धानि। प्राचीनवैयाकरणमतं राद्धान्तत्वेन आश्रयीकृत्य लघुशोधप्रबन्धोऽयं लिख्यमानो वर्तते। प्रतियोगिज्ञानं विना यथाभावज्ञानं न सम्भवति, तथैव प्राचीनवैयाकरणमतज्ञानं विना तन्मते दोषदानं न सम्भवति। अतः हेतुतासङ्गत्या प्राचीनवैयाकरणमतं संक्षेपेणोच्यते।

**प्राचीनवैयाकरणमतम्**

> फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
> फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥[1] इति

इयं कारिकाऽस्य प्रकरणस्य प्राणभूता वर्तते। फलव्यापारयोः धातुः स्मृतः इति प्रथमपादस्यार्थः। विशेषानुशासनाभावात् द्वितीयपादे स्थितस्य 'स्मृताः' इत्यस्य वचनविपरिणामेन स्मृतः इत्यर्थो भवति। अनन्वितार्थकविभक्त्यादित्यागेन अन्वितार्थकविभक्त्यादिकल्पनं विपरिणामः। फलव्यापारयोः इत्यत्र वाचकत्वं सप्तम्यर्थः। फलव्यापारवाचकः धातुरित्यर्थः। फलव्यापारयोः इत्यत्र द्विवचननिर्देशात् फलनिरूपिता व्यापारनिरूपिता च पृथक् शक्तिः अथवा एकवृन्तगतफलद्वयन्यायेन पृथगुपस्थितिप्रयोजिका खण्डश एका एव शक्तिरस्ति इति सर्वतन्त्रस्वतन्त्रेण भट्टोजिदीक्षितेन सूचितम्। धातुः वाचकः। फलं व्यापारश्च वाच्यौ। वाचकता धातुनिष्ठा। वाच्यता फलनिष्ठा व्यापारनिष्ठा च। फलव्यापारोभयनिष्ठवाच्यतानिरूपितवाचकता धातौ अस्ति। अर्थात् फलव्यापारोभयनिष्ठवाच्यतानिरूपितवाचकताश्रयः अथवा फलव्यापारोभयनिष्ठवाच्यतानिरूपितवाचकतावान् धातुः इत्यर्थः। कोऽयं धातुरिति जिज्ञासायामुच्यते भ्वादिगणपठितत्वे सति क्रियावत्त्वम् अथवा तिङ्कृत्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वम् अथवा धातुसंज्ञाविधायकसूत्रीयोद्देश्यतावच्छेदकाक्रान्तत्वं धातुत्वम्, तद्वान्धातुः। फलत्वञ्च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे

तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। साध्यत्वप्रकारकप्रतीतिविषयत्वं व्यापारत्वम्। साध्यत्वञ्च क्रियान्तराकांक्षानुत्थापकतावच्छेदकरूपवत्त्वम्। पृथक्शक्तिवादिनां प्राचीनवैयाकरणानां नये विशिष्टशक्तिवादिभिः नव्यनैयायिकवैयाकरणैः केचन दोषाः उत्थापिताः सन्ति। ते यथा-

१. फलव्यापारयोः परस्परमनन्वयापत्तिः।
२. उद्देश्यविधेयभावेन अन्वयापत्तिः।
३. कार्यकारणभावद्वयकल्पनापत्तिः।
४. अर्थद्वये शक्तिद्वयकल्पनापत्तिः।
५. शक्यतावच्छेदकद्वयकल्पनापत्तिः।
६. गमनं न स्पन्दः इत्यस्य प्रामाण्यापत्तिः।

**फलव्यापारयोः परस्परमनन्वयापत्तिः**

फले व्यापारे च पृथक् शक्तिः स्वीक्रियते चेत् फलं व्यापारश्च पदार्थौ भवतः, तत्रान्येषामन्वयोपि भविष्यति, किन्तु फलस्य व्यापारे अन्वयो न भविष्यति। परन्तु प्राचीनवैयाकरणानां मते फलम् अनुकूलत्वसम्बन्धेन व्यापारे अन्वेति, व्यापारश्च जन्यत्वसम्बन्धेन फल अन्वेति। कथमिति चेत् "शाब्दबोधे चैकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते"[२] इति व्युत्पत्तिवादग्रन्थविरोधात्। अस्यैव शब्दान्तरैः कथनमस्ति एकं यत् पदं तदर्थनिष्ठानुयोगितानिरूपकः, अपरं यत् पदं तदर्थनिष्ठप्रतियोगितानिरूपकः संसर्गः आकाङ्क्षया भासत इति। नीलो घटः इत्यस्य नीलाभिन्नघटः इति शाब्दबोधो भवति, तत्र अभेदसम्बन्धस्य प्रतियोगी भवति नीलपदार्थः, अनुयोगी भवति घटपदार्थः इति, अभेदसम्बन्धश्च तयोः निरूपकः। नीलो घटः इत्यत्र एकं पदमस्ति घटपदमिति, तदर्थः घटः, तन्निष्ठानुयोगितानिरूपकः, अथ च अपरं पदं नीलपदम्, तदर्थः नीलः, तन्निष्ठप्रतियोगितानिरूपकः संसर्गः अभेदः आकाङ्क्षया भासते। नीलघटपदार्थयोः वाचकं पदं भिन्नं भिन्नमस्ति, अतः तयोः मिथोऽन्वयः सम्भवति। परन्तु फलव्यापारयोः वाचकं पदमेकमेव अस्ति, अतस्तयोः परस्परमन्वयो न सम्भवति। अर्थाद् एकेन पदेन उपस्थापितयोः अर्थयोः मध्ये परस्परमन्वयो न भवतीति। तदेवोक्तं परमलघुमञ्जूषायाम् "तत्पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वात्"[३] । अस्यायम्भावः तत्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन पदान्तरजन्योपस्थितिः कारणम्। तथैव तत्पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन पदान्तरजन्योपस्थितिः कारणम्। ज्ञानं समवायसम्बन्धेन आत्मनि , विषयतासम्बन्धेन विषयेषु तिष्ठति। यथा नीलो घटः इति वाक्यात् नीलाभिन्नघटः इति शाब्दबोधो भवति। स च शाब्दबोधः समवायसम्बन्धेन आत्मनि तिष्ठति ज्ञानत्वात्। स च घटनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन नीले, नीलनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन घटे तिष्ठति। नीलपदजन्यनीलार्थविषयकोपस्थितिः विशेष्यतासम्बन्धेन नीलार्थे तिष्ठति। घटपदजन्यघटार्थविषयकोपस्थितिः विशेष्यतासम्बन्धेन घटार्थे तिष्ठति। नीलाभिन्नघटः इत्याकारकः शाब्दबोधः घटार्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन नीलार्थे अस्ति, किञ्च घटपदभिन्ननीलपदजन्यनीलार्थोपस्थितिः विशेष्यतासम्बन्धेन भवति। स च शाब्दबोधः नीलार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन घटार्थे अस्ति, किञ्च विशेष्यतासम्बन्धेन नीलपदभिन्नघटपदजन्यघटार्थोपस्थितिः भवति। अर्थात् यत्र विशेष्यतासम्बन्धेन पदान्तरजन्योपस्थितिः भवति तत्रैव तत्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधो भवति। पचतीत्यत्र पदान्तरजन्यपदार्थोपस्थितिः न

भवति अतः एतादृशः शाब्दबोधो न भवति। कथमिति चेत् विक्लित्तिरूपफलस्य फूत्कारादिरूपव्यापारस्य च वाचकं पदमेकमेव अस्ति, अतः पदान्तराभावात् विशेष्यतासम्बन्धेन पदान्तरजन्यपदार्थोपस्थितिः न भवति। तस्मात् फलव्यापारयोः मिथोन्वयः प्राचीनवैयाकरणैः स्वीकृतः स च न सम्भवति।

अपि च प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्यैव प्राधान्यम् इति वैयाकरणशास्त्रसिद्धो नियमः। अर्थात् प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति प्रत्ययजन्योपस्थितिः कारणम्। किन्तु प्राचीनवैयाकरणाः धात्वर्थस्य फलस्य धात्वर्थे व्यापारे अन्वयं प्रतिपादयन्ति। प्रकृत्यर्थस्य प्रकृत्यर्थे अन्वयो न सम्भवति। एवञ्च प्राचीनवैयाकरणमते परस्परमन्वयो न सम्भवति।

**समाधानम्**

नैयायिकनव्यादिभिः प्राचीनमते उत्थापितः दोषः परिहर्तुं शक्यते। अयञ्च दोषः सर्वेषां मते अस्ति। कर्तृप्रत्ययस्थले तिपः कर्तरि, एकत्वे, वर्तमानकाले च शक्तिः, कर्मप्रत्ययस्थले कर्मणि, एकत्वे, वर्तमानकाले च शक्तिः वैयाकरणैः स्वीक्रियते। किञ्च एकपदोपस्थापितयोः कर्तृसंख्ययोः कर्तरि संख्यायाः अन्वयं, कर्मसंख्ययोः कर्मणि संख्यायाः अन्वयं प्रतिपादयन्ति। एवमेव नैययिकाः तिपः कृतौ, एकत्वे, वर्तमानकाले च शक्तिं स्वीकुर्वन्ति। तत्र एकपदोपस्थापितयोः कृतिवर्तमानकालयोः कृतौ वर्तमानस्यान्वयं साधयन्ति। एवमेव मीमांसकाः तिपः भावनायां वर्तमाने एकत्वे च शक्तिं स्वीकुर्वन्ति। तत्र एकपदोपस्थापितयोः भावनावर्तमानयोः वर्तमानस्य भावनायाम् अन्वयं प्रतिपादयन्ति। येन प्रकारेण प्राचीनवैयाकरणमते दोषः उत्थापितः, तेनैव प्रकारेण सर्वेषां मते दोषः उत्थापयितुं शक्यते। अतः सर्वैरेव एकपदोपस्थापितयोः परस्परमन्वयः स्वीकर्तव्य एव। अतः नियमः परिष्क्रियते इत्थम्- तत्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोऽधं प्रति तत्तत्पदभिन्नपदजन्योपस्थितिः कारणम्। नियमघटकेन तत्तत्पदभिन्न इत्यनेन यत्र एकपदोपस्थापितयोः परस्परमन्वयः इष्टः स्वीकर्तव्यश्च एव तत्तत्स्थानभिन्नत्वं बोध्यम्। एवञ्च तिङा उपस्थापितयोः कर्तृसंख्ययोः परस्परमन्वयबोधः प्रामाणिकः, धातुना उपस्थापितयोः फलव्यापारयोः परस्परमन्वयः प्रामाणिकः, अतः धातुतिङ्भिन्नस्थले नियमोऽयं प्रवर्तते इति बोध्यम्। तस्मात् नास्ति फलव्यापारयोः परस्परमन्वयापत्तिरूपदोषः।

अपि च प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्यैव प्राधान्यम् इति वैयाकरणशास्त्रसिद्धनियमेन उत्थापितो दोषोऽपि न सम्भवति। अर्थात् प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति प्रत्ययजन्योपस्थितिः कारणम् इति नियमेऽपि धातुभिन्नत्वं प्रदीयते।

**उद्देश्यविधेयभावेनान्वयापत्तिः**

पृथक्शक्तिवादिनां प्राचीनवैयाकरणानां मते फलं व्यापारे अनुकूलसम्बन्धेनान्वेति, व्यापारः फले जन्यत्वसम्बन्धेन अन्वेति। पृथक्शक्तिस्वीकारे खण्डशः शक्तिस्वीकारे वा उद्देश्यविधेयभावेनान्वयापत्तिः प्राप्नेति विशिष्टशक्तिवादिनः नव्यनैयायिकवैयाकरणाः आहुः। पृथगुपस्थितयोः अर्थयोः मध्ये परस्परम् उद्देश्यविधेयभावेनान्वयो भवति। यथा अदेङ्गुणः। अदेङ्-पदेन अदेङ्-रूपार्थस्य उपस्थितिः भवति, गुणपदेन गुणार्थस्य उपस्थितिः भवति। तयोः उपस्थितयोः अर्थयोः मिथः उद्देश्यविधेयभावेनान्वयो भवति। इत्थं प्राचीनमतस्वीकारे सति फलव्यापारयोः परस्परम् उद्देश्यविधेयभावेनान्वयो भवेत्। तथाहि कदाचित् फलोद्देश्यकव्यापारविधेयकबोधापत्तिः स्यात्, कदाचिच्च

व्यापारोद्देश्यकफलविधेयकबोधापत्तिः स्यात्। तदेवाह नागेशः- "परे तु फलव्यापारयोर्धातोः पृथक् शक्तावुद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात्। पृथगुपस्थितयोस्तथा अन्वयस्यौत्सर्गिकत्वात् "[४]।

**समाधानम्**

अयं न दोषोऽपि तु दोषाभासः। यद्ययं दोषः स्यात् तर्हि अयं दोषः सर्वेषां मते सम्भवति। कर्तृकर्मसंख्याकालाः तिङ्वाच्याः प्राचीननव्यैः सर्वैरेव स्वीकृताः वर्तन्ते। तत्र तिङ्पदस्य कर्तरि, कर्मणि, संख्यायाम्, काले च पृथक् शक्तिः अस्तीति सर्वैरेव स्वीकृता, न केनापि कालविशिष्टकर्तरि, संख्याविशिष्टकर्तरि च शक्तिः स्वीकृता वर्तते। अतः तन्मतेऽपि कर्तृकर्मकालसंख्यानाम् उद्देश्यविधेयभावेनान्वयापत्तिः प्राप्ता। दोषममुं निराकरणाय ते नव्याः परस्परमुद्देश्यविधेयभावसम्बन्धेनान्वयप्रयोजकव्युत्पत्तौ तिङ्भिन्नत्वं निवेशयन्ति। तथैव प्राचीना अपि परस्परमुद्देश्यविधेयभावसम्बन्धेनान्वयप्रयोजकव्युत्पत्तौ धातुभिन्नत्वं निवेश्य दोषं निराकुर्वन्ति। अपि च विभिन्नपदोपस्थापितयोर्थयोरेव उद्देश्यविधेयभावेनान्वयः सम्भवति, न तु एकपदोपस्थापितयोः द्वयोः अर्थयोः मिथः उद्देश्यविधेयभावेनान्वयो भवति। एकपदोपस्थापितयोः द्वयोः अर्थयोः परस्परम् उद्देश्यविधेयभावेनान्वये कश्चिदपि दृष्टान्तः नास्ति। यत्र च भिन्नभिन्नपदाभ्यां अर्थस्य उपस्थितिः भवति तत्र कथञ्चित् उद्देश्यविधेयभावेन अन्वयो भवति, परन्तु यत्र एकेनैव पदेन द्वयोः अर्थयोः उपस्थितिः भवति तत्र उद्देश्यविधेयभावेन अन्वयो न भवति। यथा हर्यादिपदम्। यदि एकपदोपस्थाप्ययोः अर्थयोः परस्परमुद्देश्यविधेयभावेन अन्वयः स्वीक्रियते तर्हि हर्यादिपदोपस्थाप्ययोः विष्णुसिंहयोः अपि उद्देश्यविधेयभावेनान्वयो भवेत्। परन्तु क्वापि विष्णुपदोपस्थापितानाम् अर्थानां मिथः उद्देश्यविधेयभावेनान्वयो भवति। प्राचीनमतं समर्थयन् प्रभाकारः लिखति "वस्तुतस्तु फले व्यापारे च खण्डशः शक्तिरिति प्राचीनमतमेव ज्यायः, उद्देश्यविधेयभावेनान्वयनियामकव्युत्पत्तौ धातुभिन्नत्वस्य विशेषणदानेनादोषात्"[५]।

**कार्यकारणभावद्वयकल्पनापत्तिः**

वैयाकरणाः व्यापारमुख्यविशेष्यकशाब्दबोधं स्वीकुर्वन्ति। पचतीति पदात् कर्तृवृत्तिः वर्तमानकालिकः विक्लित्त्यनुकूलव्यापारः इति शाब्दबोधो भवति प्राचीनवैयाकरणमते। पच्यते इति पदात् कर्मवृत्तिवर्तमानकालिकविक्लित्त्यनुकूलव्यापारः इति शाब्दबोधो भवति। प्राचीननये तिङन्तस्थले प्रत्ययार्थः वृत्तित्वसम्बन्धेन व्यापारे विशेषणतयान्वेति, फलञ्चानुकूलत्वसम्बन्धेन व्यापारे विशेषणं भवति। परन्तु कृदन्तस्थले कर्तृप्रत्ययसमभिव्यहारे प्रत्ययार्थे आश्रये व्यापारः विशेषणं भवति, व्यापारे च फलं विशेषणं भवति। पाचकः इति पदात् विक्लित्यनुकूलव्यापाराश्रयः इत्याकारकः शाब्दबोधो भवति। कर्मप्रत्ययसमभिव्यहारे प्रत्ययार्थे फलं विशेषणं भवति, फले च व्यापारः विशेषणं भवति। पक्वः इति पदात् व्यापारजन्यविक्लित्त्याश्रयः इत्याकारकः शाब्दबोधो भवति। अतः कदाचित् फलविशेषणकव्यापारविशेष्यकबोधो भवति, कदाचिच्च व्यापारविशेषणकफलविशेष्यकबोधो भवति। फलविशेषणकव्यापारविशेष्यकबोधं प्रति कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलविशेष्यकबोधं प्रति कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम् इति कार्यकारणभावद्वयकल्पना कर्तव्या भवति। तथाह्युक्तं परमलघुमञ्जूषायां नागेशेन "किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम्। तथाहि फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणद्वयकल्पनम्"[६]।

**समाधानम्**

विशिष्टशक्तिवादिनां मतेऽपि अयं दोषो वर्तते। धातूनां फलविशिष्टव्यापारे उत व्यापारविशिष्टफले शक्तिः अस्तीति तैरपि वक्तव्या भवति। पचतीत्यत्र फलविशिष्टव्यापारे शक्तिः, पच्यते इत्यत्र व्यापारविशिष्टफले शक्तिरिति तैः स्वीकृता वर्तते। अतः फलविशिष्टव्यापारविषयकबोधे कर्तृप्रत्ययसमभिव्याहारः कारणम्, व्यापारविशिष्टफलविषयकबोधे कर्मप्रत्ययसमभिव्याहारः कारणम् इति कार्यकारणभावद्वयस्य कल्पना तैरपि कर्तव्या भवति। पुनः फलमुखगौरवस्यादोषात् प्राचीननये दोषो नास्ति।

**अर्थद्वये शक्तिद्वयकल्पनापत्तिः**

दोषमुद्भावयता विशिष्टशक्तिवादिना प्राचीननये अर्थद्वये शक्तिद्वयकल्पनापत्तिरूपो दोषः उत्थापितः। फले व्यापारे च पृथक् शक्तिः प्राचीननये स्वीकृता वर्तते। अतः एका फलनिरूपिता शक्तिः, अपरा च व्यापारनिरूपिता शक्तिः। अतः शक्तिद्वयकल्पनापत्तिरूपदोषः अस्तीति सुस्पष्टम्।

**समाधानम्**

नवीननये दोषं प्रदशयन् स्वमते दोषस्य निराकरणमकरोत् ग्रन्थकृत्। नव्यैरपि शक्तिद्वयकल्पना कर्तव्यैव। यद्यपि प्राचीनैः एकया शक्त्या कार्यं साधयितुं शक्यते किन्तु नव्यैः एकया शक्त्या कार्यं साधयितुं न शक्यते। यतोहि तैः फलविशिष्टव्यापारे, व्यापारविशिष्टफले च शक्तिः स्वीकर्तव्या भवति। प्राचीनास्तु फलव्यापारोपस्थापिका एकैव शक्तिः स्वीकृता। अतः प्रोक्तदोषः यद्यपि प्राचीननये निराकर्तुं शक्यः, किन्तु नवीननये निराकर्तुमनर्ह एव।

**शक्यतावच्छेदकद्वयकल्पनापत्तिः**

येन पथा नव्याः प्राचीननये दोषः उत्थापितः, तेनैव पथा दोषोऽयमुत्थापितः। यदि शक्तिद्वयं स्वीकर्तव्यं भवति तर्हि शक्यतावच्छेदकमपि द्वयमेव स्यात्। यथा कारणता, कार्यता, प्रकारता, विशेष्यता किञ्चिद्धर्मावच्छिन्ना भवति तथैव शक्यताऽपि किञ्चिद्धर्मावच्छिन्ना भवति। अतः प्राचीननये शक्यतावच्छेदकद्वयकल्पना कर्तव्या भवति। येन प्रकारेण अव्यवहितपूर्वो दोषः निराकृतस्तेनैव प्रकारेणायमपि दोषः निराकृत, अतः उक्तदोषः प्राचीननये नास्ति अपि तु नव्यनये एव देदीप्यमानो विराजते। यदि फलविशिष्टव्यापारः शक्यो भवेत् तर्हि शक्यतावच्छेदकं फलविशिष्टव्यापारत्वं भवेदेवैवं व्यापारविशिष्टफले बोध्यम्।

**गमनं न स्पन्दः इत्यस्य प्रामाण्यापत्तिः**

पृथक्शक्तिवादिनां प्राचीनवैयाकरणानां नये गमनं न स्पन्दः इत्यस्य प्रामाण्यापत्तिः भवति। फले व्यापारे च पृथक् शक्तिः स्वीक्रियते चेत् फलं व्यापाराश्च स्वतन्त्रपदार्थः स्यात्, अतः तत्र तत्र पदार्थान्तरस्यान्वयोऽपि सम्भवति। गमनं न स्पन्दः इत्यत्र स्पन्दस्य प्रतियोगिकत्वसम्बन्धेन नञर्थे भेदेऽन्वयो भवति। तस्य च स्वरूपसम्बन्धेन संयोगे अन्वयो भवति संयोगस्य स्पन्दभिन्नत्वात्। संयोगस्य चानुकूलत्वसम्बन्धेन धात्वर्थव्यापारे अन्वयो भवति। स्पन्दप्रतियोगिकभेदवत्संयोगानकूलव्यापारः इत्यर्थो भवति प्रोक्तवाक्यात्। अर्थात् स्पन्दभेदवान् यः संयोगःतदनुकूलव्यापारः इति बोधः। अयञ्च बोधः प्रामाणिकैरप्रामाणिकः स्वीकृतः अस्ति।

**समाधानम्**

नव्याः रीतिमजानन्तः प्राच्यनये दोषमुदभावयन्। यतोहि प्राचीननये धातुना उपस्थापितयोः फलव्यापारयोः अन्तरङ्गत्वादादौ फलस्य व्यापारे अनुकूलत्वसम्बन्धेन अन्वयो भवति। अतः पुनः तत्र पदार्थान्तरस्य अन्वयो न सम्भवति। "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्"[७] इति न्यायेन गम्धातुवाच्ये संयोगरूपफले स्पन्दप्रतियोगिकभेदस्यान्वयो न सम्भवति। अस्यैव न्यायस्य शब्दान्तरम् अस्ति "न हि उपाधेः उपाधिः भवति"। विशेषणस्य विशेषणान्तरं न सम्भवति। अतः गमनं न स्पन्दः इति वाक्यप्रयोगो न सम्भवति। प्रोक्तन्यायविरोधात् स्पन्दस्य यथा फलेऽन्वयो न भवति, तथैव स्तोकं पचति इत्यत्र क्रियाविशेषणस्य स्तोकस्य विक्लित्तिरूपे फले, तण्डुलं पचतीत्यत्र तण्डुलस्य धातुवाच्ये फले भेदेन अन्वयो न स्यादिति न वक्तव्यम्, कथमिति चेदुच्यते स्तोकपदं, तण्डुलपदञ्च फले साकांक्षम्। अतः न्यायविरोधेऽपि स्तोकतण्डुलादीनां धातुवाच्ये व्यापारजन्ये फलेऽन्वयो भवति। अतो न कश्चिदपि दोषः। अत एव प्रोक्तं वैयाकरणभूषणकृता "न च संयोगरूपे फले भेदान्वयाभिप्रायेण गमनं न स्पन्दः इति वाक्यस्य प्रामाण्यापत्तिरिति वाच्यम्, अन्तरङ्गत्वाद् युगपदुपस्थितयोः फलव्यापारयोरन्वयानन्तरमेव तत्र पदार्थान्तरस्यान्वययोग्यता गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् इति न्यायविरोधेन फले भेदान्वयानौचित्वात्। न चैवं स्तोकादीनां कर्मादीनाञ्चान्वयानुपपत्तिरिति वाच्यम्। क्रियाविशेषणानां कर्मत्वात् इत्यभियुक्तोक्तेः, फलाश्रयस्य कर्मसंज्ञाविधानाञ्च तेषामन्वये बाधकाभावात्। नागेशभट्टेनापि तथैवोक्तम् तत्र फलव्यापारावन्तरङ्गत्वात्परस्परविशेषणतामनुभूयैवार्थान्तरान्वयिनौ"[८]।

**उपसंहारः**

अत्र लघुशोधप्रबन्धे प्राचीनवैयाकरणमतमेव सिद्धान्तत्वेन स्वीकृतं वर्तते। किञ्च पूर्वपक्षत्वेन चिन्तामणिकारस्य नव्यनैयायिकानां, नागेशादीनां नव्यवैयाकरणानां मतं स्वीकृतं वर्तते। तत्र नैयायिकेषु चतुर्विधानि मतानि प्राप्यन्ते। एकं रत्नकोशकारस्य व्यापारमात्रं धात्वर्थः। द्वितीयं प्राचीननैयायिकानां मण्डनमतानुयायिनां फलमात्रं धात्वर्थः। चिन्तामणिकारस्य नव्यनैयायिकानां च तृतीयं फलविशिष्टव्यापारो धात्वर्थः। चतुर्थं दीधितिकर्तुः नव्यनैयायिकानां फलं व्यापारश्च धात्वर्थः। अत्र लक्षणीयमिदमस्ति यत् प्राचीनाः स्वमते उद्भावितानां दोषाणां निराकरणं पूर्वपक्षिमते दोषदानेन अकुर्वन्। स्वमते उत्थापितस्य दोषस्य निराकरणं स्वसिद्धान्तमाधारीकृत्यैव करणीयम्, परन्त्वत्र सर्वेऽपि दार्शनिकाः केवलमन्येषां मते दोषमेवोत्थापयन्ति, न तु स्वमते स्थितस्य दोषस्य निराकरणं कुर्वन्ति। यथा-

प्राचीनवैयाकरणमते नैयायिकनव्यादिभिः फलव्यापारयोः परस्परमनन्वयापत्तिरूपो दोषः उद्भावितः अस्ति। तस्य समाधानं प्राच्यशाब्दिकैः पूर्वपक्षिमते तिङा उपस्थापितानां कर्तृकालसंख्यानां परस्परमनन्वयापत्तिरूपशङ्कया प्रदत्तम्, न तु स्वसिद्धान्तमवलम्ब्य। पूर्वपक्षिणां मते दोषः अस्तीति कारणादेव भवन्मतं नाद्रियते। तेषां मते दोषोऽस्ति अस्यायं नाऽर्थः यद्भवतां मतं समीचीनमस्ति।

पूर्वपक्षिभिः प्राच्यनये धातुवाच्ययोः फलव्यापारयोः उद्देश्यविधेयभावेनान्वयापत्तिरूपदोषः उत्थापितः, तस्याऽपि समाधानं पूर्ववत् पूर्वपक्षिनये दोषमुद्भावयन्नेव निराकरोत्। तत्रापि तिङ्-वाच्यानां कर्तृकालसंख्यानां परस्परमुद्देश्यविधेयभावेनान्वयापत्तिरूपदोषः उद्भावितः।

नव्यशाब्दिकैः प्राच्यशाब्दिकानां मते कार्यकारणभावद्वयकल्पनापत्तिरूपदोषे दर्शिते सति पूर्ववदेव निराकरणं कृतम्। निराकरणरीतिश्च पूर्वप्रतिपादितैवाऽस्ति। एवम् अर्थद्वये शक्तिद्वयकल्पनापत्तिः, शक्यतावच्छेदकद्वयकल्पनापत्तिश्च इत्यत्र बोध्यम्।

स्वमते उद्भावितस्य गमनं न स्पन्दः इति दोषस्य निराकरणं ‘‘गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्’’ इति न्यायेन कृतं वर्तते। परन्तु शब्दरत्नकारः हलन्त्यमिति सूत्रे अस्य न्यायस्य प्रत्याख्यानं चकार। हलः अन्त्यम् इति षष्ठीतत्पुरुषसमासे स्वीकृते सति षष्ठीस्थाने योगा इति परिभाषया ‘हलः स्थाने योऽन्त्यः स इत्संज्ञको भवति’ इत्यर्थस्यापत्तिः भवति। तदा शब्दरत्नकृता प्रोक्तन्यायेन अस्याः आपत्तेः निराकरणं कृतम्। षष्ठीस्थाने योगा इति सूत्रस्य परार्थत्वात् गुणत्वमापन्नम् अतो द्वयोः गुणभूतयोः सूत्रयोः परस्परं सम्बन्धो न भवति। अतः प्रकृते सूत्रे षष्ठीस्थाने योगा इति सूत्रं न प्रवर्तते। परमस्यापि खण्डनं कृतं वर्तते। कथमिति चेत् संयोगे गुरु इति सूत्रे तस्मिन्निति निर्दिष्टे पूर्वस्य इति सूत्रस्य प्रवृत्तेः। संयोगाव्यवहितपूर्वस्य ह्रस्वस्य गुरुसंज्ञा भवति इति सूत्रार्थः। अत्रोभयमपि सूत्रं गुणभूतं वर्तते, परन्तु तयोः सम्बन्धः भवति। अतो न्यायोऽयं न सार्वत्रिकः। तस्मात् प्राचीनवैयाकरणमते दोषः तदवस्थ एव। अस्याः शङ्कायाः समाधानं न्यायस्य सार्वत्रिकत्वमाधारीकृत्यैव वक्तव्यम्। न्यायस्तत्र यद्यपि न प्रवर्तते परन्तु प्रकृते प्रवर्तते इति आदायैव समाधानं चिन्त्यमिति शम्।

**सङ्केतपञ्जिः**

वै. म.= वैयाकरणमतोन्मज्जनम्

व्यु. वा. = व्युत्पत्तिवादः

वै. भू .सा. = वैयाकरणभूषणसारः

वै. ल. म. = वैयाकरणसिद्धान्तलघुमञ्जूषा

प. ल. म. = परमलघुमञ्जूषा

भु. लौ .न्या. = भुवनेशलौकिकन्यायसाहस्री

सम्पा. = सम्पादकः

**उल्लेखपञ्जिः**

१. वै. म. कारिकासंख्या-२, पत्रसंख्या-१
२. व्यु. वा. पत्रसंख्या-१
३. प. ल. म. पत्रसंख्या-१३५
४. प. ल. म. पत्रसंख्या-५७
५. वै. भू. सा. पत्रसंख्या १३
६. प. ल. म. पत्रसंख्या ५८
७. भु. लौ. न्या. पत्रसंख्या १७१
८. वै. ल. म. पत्रसंख्या ११

**परिशीलितग्रन्थपञ्जिः**

कौण्डभट्टः। *वैयाकरणभूषणसारः*। सम्पा. श्रीगुरुप्रसादशास्त्री। चौखम्बा सुरभारती प्रकाशन, वाराणसी।

कौण्डभट्टः। *वैयाकरणसिद्धान्तभूषणम्*। सम्पा. के.वि. रामकृष्णमाचार्यः। श्रीसोमनाथसंस्कृतविश्वविद्यालयः, २०१५।

कौण्डभट्टः। *वैयाकरणभूषणसारः*। सम्पा. भीमसेनशास्त्री। भैमी प्रकाशन, २०१९।

कौण्डभट्टः। *वैयाकरणभूषणसारः*। सम्पा. श्रीबालकृष्ण पञ्चोली, श्रीहरिवल्लभशास्त्री। चौखम्बासंस्कृतसंस्थानम्, २००६।

नागेशभट्टः। *परमलघमञ्जुषा*। सम्पा. आचार्य लोकमणि दाहाल। चौखम्बा सुरभारती प्रकाशन, वाराणसी,२००६।

नागेशभट्टः। *वैयाकरणसिद्धान्तलघुमञ्जूषा*। सम्पा. सभापतिशर्मोपाध्यायः। चौखम्बा संस्कृत संस्थान, वाराणसी, २००६।

भट्टोजिदीक्षितः। *प्रौढमनोरमा*। सम्पा. रमाकान्त पाण्डेयः। चौखम्बा विद्याभवन, २०२०।

# गतिबुद्धीत्यादिसूत्रस्य विधित्वनियमत्वविमर्शः

प्रलय-नन्दी

**सारसंक्षेपः**

"कर्तुरीप्सिततमं कर्म"[१] इति सूत्रेण प्रकृतधात्वर्थ-प्रधानीभूतव्यापारप्रयोज्य-प्रकृतधात्वर्थ-फलाश्रयत्वेनोद्देश्यभूतस्य पदार्थस्य कर्मसंज्ञा विधीयते। यथा देवदत्तस्तण्डुलं पचति इत्यत्र प्रकृतधातुः पच्-धातुः, तदर्थप्रधानीभूतव्यापारः विक्लित्त्यनुकूलव्यापारः, तत्प्रयोज्यं प्रकृतधात्वर्थफलं विक्लित्तिः, तदाश्रयत्वेन उद्देश्यः तण्डुलः। अतोऽत्र तण्डुलस्य कर्मसंज्ञा विधीयते। इत्थमन्यत्रापि व्यवस्था प्रकल्प्यते। अथ णिजन्तस्थले दृश्यते विशेषः। यथा हरिः शत्रून् स्वर्गम् अगमयदित्यत्र अण्यन्तकर्तुरपि कर्मत्वं दृश्यते, परन्तु यज्ञदत्तो देवदत्तेन ओदनं पाचयतीत्यत्र अण्यन्तकर्तुः कर्तृत्वेनैव प्रयोगो दृश्यते। एवं सति कुत्र अण्यन्तकर्तुः कर्तृत्वं कुत्र च कर्मत्वमिति व्यवस्थापनार्थं "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ"[२] इति सूत्रं प्रणीतम्। ततो गतिबुद्ध्याद्यर्थकानाम् अकर्मकाणाञ्च धातूनां णिजन्तत्वेन प्रयोगे सति अण्यन्तकर्तुः कर्मत्वं भवतीति निर्वाहप्रकारः। परन्तु यः अण्यन्तकर्ता अर्थात् प्रयोज्यः, तस्य कर्तृत्वं प्रबाध्य अपूर्वतया कर्मत्वं विधीयते अथवा प्राप्तस्यैव कर्मत्वस्य नियमः क्रियते इति विषये विद्वत्सम्प्रदाये दृश्यते विवादावसरः। प्रकृतप्रबन्धे अस्मिन् विषये एव विमर्शः प्रस्तूयते।

**कुञ्चिकाशब्दः**

प्रयोज्यः, प्रयोजकः, कर्मत्वम्, कर्तृत्वम्, विधित्वम्, नियमत्वम्।

**सूत्रस्य सामान्यार्थः**

गतिश्च बुद्धिश्च प्रत्यवसानञ्चेति गतिबुद्धिप्रत्यवसानानि, गतिबुद्धिप्रत्यवसानानि अर्था येषां ते गति-बुद्धि-प्रत्यवसानार्थाः, शब्दः कर्म येषां ते शब्दकर्माणः, अविद्यमानं कर्म येषां ते अकर्मकाः, गति-बुद्धि-प्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्चेति गतिबुद्धि-प्रत्यवसानार्थ-शब्दकर्माकर्मकाः, तेषामिति विग्रहो बोध्यः। धातूनामिति शेषः। अणि इति णाविति च सप्तम्यन्तं पदद्वयम्। कर्ता इति स इति च प्रथमान्तं पदद्वयम्। कारकमिति प्रथमान्तं पदमधिक्रियते, कर्मेति प्रथमान्तं चानुवर्तते। ततो गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्माकर्मकाणाम् अणि यः कर्ता कारकं स णौ कर्म इत्यन्वयो लभ्यते। अणीति लुप्तसप्तम्यन्तम्, अस्य अण्यन्तावस्थायामिति तात्पर्यम्। एवमेव णावित्यस्य ण्यन्तावस्थायामित्यर्थः। गतिबुद्धिप्रत्यवसानार्थेत्यादिबहुव्रीहीणाम् अन्यपदार्थो धातुः। ततो गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्माकर्मकाणां धातूनाम् अण्यन्तावस्थायां यः कर्ता तस्य तत्तद्धातूनां ण्यन्तावस्थायां कर्मसंज्ञा भवतीति सूत्रस्य सामान्यार्थो लभ्यते।

**उदाहरणम्**

अत्रोदाहरणं यथा हरिः शत्रून् स्वर्गं गमयति। गमयतीति गत्यर्थकस्य गम्-धातोः ण्यन्तरूपम्। तस्याण्यन्तावस्थायां शत्रवः स्वर्गं गच्छन्तीति प्रयोगः। अत्र अण्यन्तदशायां गम्-धातुवाच्यक्रियायाः कर्ता शत्रुः। अतः प्रकृतसूत्रेण ण्यन्तावस्थायां गमयतीत्यत्र अण्यन्तकर्तुः शत्रोः कर्मसंज्ञा भवति। ततश्च हरिः शत्रून् स्वर्गं गमयतीति प्रयोगः सिध्यति। एवमेव हरिः वेदार्थं स्वान् वेदयति, विष्णुः देवान् अमृतम् आशयति, नारायणो विधिं वेदम् अध्यापयति, भगवान् वराहः सलिले पृथिवीम् आसयतीत्यादीनि प्रकृते उदाहरणानि बोध्यानि।

**विचारः**

"कर्तुरीप्सिततमं कर्म"[३] इति कर्मसंज्ञाविधायकं प्रधानं सूत्रम्। कर्मत्वं च प्रकृतधात्वर्थ-प्रधानीभूत-व्यापारप्रयोज्य-प्रकृतधात्वर्थ-फलाश्रयत्वेनोद्देश्यत्वम्। गतिबुद्धीत्यादिसूत्रमपि कर्मसंज्ञाप्रसङ्गे एव लभ्यते। परन्तु गतिबुद्ध्याद्यर्थकाः ण्यन्तधातवः एवास्य विषयः इति विशेषः। "हेतुमति च"[४] इति सूत्रेण प्रेषणादिलक्षणे प्रयोजकव्यापारे अभिधेये धातोर्णिच् प्रत्ययो विधीयते। एवंविधस्य णिचः प्रयोगे द्वौ कर्तारौ उपलभ्येते, एकः प्रयोजकः अपरः प्रयोज्यः। तदेतस्य प्रयोज्यकर्तुः कर्मत्वं विधीयते प्रकृतसूत्रेण। तत्रेदं गतिबुद्धीत्यादि सूत्रं कर्मसंज्ञां विधत्त इति दीक्षितप्रभृतीनाम् आशयः। नागेशस्तु अस्य नियामकत्वमेव प्रतिपादयति, तन्मतेऽत्र गत्यर्थादीनामेव अण्यन्तानां कर्ता ण्यन्ते कर्मसञ्ज्ञको भवति नान्येषामिति नियमः क्रियते। सम्प्रति अनयोः पक्षयोः आशयः कः इति प्रतिपाद्य तयोर्मध्ये कश्च आश्रयणीयः इति युक्तिभिः प्रतिपाद्यते।

**विधित्वपक्षः**

गतिबुद्धीत्यादिसूत्रं विधिरिति दीक्षितप्रभृतीनामाशयः। तत्रोच्यते -

> परत्वादुपजीव्यत्वादन्तरङ्गतयापि च।
> प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता[५]॥ इति।

देवदत्तः ग्रामं गच्छति इत्यस्य ण्यन्तावस्थायां यज्ञदत्तः देवदत्तं ग्रामं गमयति इत्यत्र देवदत्तस्य प्रकृतसूत्रेण कर्मसंज्ञा। अत्र प्रयोजको यज्ञदत्तः प्रयोज्यो देवदत्तः। अथात्र प्रयोज्यस्य कर्मत्वं कर्तृत्वं चेत्युभयमपि प्राप्तम्। तदा परत्वाद् उपजीव्यत्वाद् अन्तरङ्गत्वाच्च कर्मसंज्ञां बाधित्वा कर्तृसंज्ञैव प्राप्नोति। ततः प्राप्यमाणां कर्तृसंज्ञां बाधित्वा प्रकृतसूत्रेण प्रयोज्यस्य कर्मसंज्ञा विधीयते न तु नियम्यते इत्याशयः। प्रकृतसूत्रस्य विधित्वसम्पादकाः त्रयो हेतवः सम्प्रति वर्ण्यन्ते।

**(१) परत्वात् कर्तृत्वम् -** यज्ञदत्तः देवदत्तं ग्रामं गमयति इत्यत्र गमिधातोः उत्तरदेशसंयोगानुकूल-व्यापारानुकूलव्यापारः अर्थः। तत्र प्रधानीभूतव्यापारः अन्तिमो व्यापारः, तत्प्रयोज्यसंयोगानुकूल-व्यापाररूप-फलस्याश्रयः प्रयोज्यो देवदत्तः। एवञ्च प्रधानीभूत-व्यापारप्रयोज्य-फलाश्रयत्वात् प्रयोज्यस्य "कर्तुरीप्सिततमं कर्म"[६] इति कर्मत्वं प्राप्तम्। अत्र प्रयोज्यो यथा प्रधानीभूत-व्यापारजन्यफलाश्रयः तथैव णिच्प्रकृतिभूतो यः शुद्धो गम्-धातुः तदर्थो य उत्तरदेशसंयोगानुकूलव्यापारः तस्यापि आश्रयः। एवञ्च शुद्धगम्-धातुवाच्यक्रियायां व्यापाराश्रयत्वेन स्वातन्त्र्यात् प्रयोज्यस्य "स्वतन्त्रः कर्ता"[७] इति कर्तृत्वमपि प्राप्तम्। ततश्च प्राप्तावकाशयोरनयोः कर्तृत्वकर्मत्वयोः प्रकृते तुल्यबलविरोधे सति परत्वात् कर्तृसंज्ञैव प्राप्नोति।

**(२) अन्तरङ्गत्वात् कर्तृत्वम् -** कर्तृत्वविधाने प्रकृतिभूतगम्-धात्वर्थमात्रस्य अपेक्षा, तत्र ण्यन्तधात्वर्थव्यापारस्य अपेक्षा न भवति। परन्तु कर्मत्वविधाने यथा ण्यन्तधात्वर्थव्यापारस्य अपेक्षा तथैव ण्यन्तधात्वर्थव्यापार-प्रयोज्यफलभूतस्य शुद्धगम्-धात्वर्थव्यापारस्यापि अपेक्षा। एवमत्र अधिकसापेक्षत्वात् कर्मत्वस्य बहिरङ्गत्वं, न्यूनसापेक्षत्वाच्च कर्तृत्वस्य अन्तरङ्गत्वम्। अतः प्रकृते प्रयोज्यस्य अन्तरङ्गत्वादपि कर्तृसंज्ञा प्राप्नोति।

**(३) उपजीव्यत्वात् कर्तृत्वम् -** प्रकृतोदाहरणे प्रयोजकनिष्ठ-व्यापारजन्य-फलाश्रयत्वात् प्रयोज्यस्य कर्मसंज्ञा प्राप्नोति। कर्मसंज्ञाविधायकञ्च सूत्रं "कर्तुरीप्सिततमं कर्म"[८] इति। कर्तुः क्रियया आप्तुमिष्टतमस्य कारकस्यानेन

कर्मसंज्ञा भवति। एवञ्च कर्मसंज्ञाविधाने कर्तृसंज्ञायाः प्रयोजकत्वात् कर्मसंज्ञां प्रति कर्तृत्वस्योपजीव्यत्वम्। तत उपजीव्यत्वादपि प्रयोज्यस्य कर्तृसंज्ञा प्राप्नोति न कर्मसंज्ञा। एवमेते त्रयो हेतवो वर्णिताः।

### विधित्वपक्षे प्रमाणम्

विधित्वपक्षवादिनो हि "आकडारादेका संज्ञा"[९] इति सूत्रस्थं भाष्यं प्रमाणत्वेन उल्लिखन्ति। तत्र आशङ्कितम् – आकडारादेका संज्ञा इत्येव सूत्रमस्तु अथवा आकडारात्परङ्कार्यम् इति। तत्र परङ्कार्यम् इति पक्षे दोषः उक्तो यत् गतिबुद्ध्यादीनां ण्यन्तानां यत्कर्म तस्य कर्तृसंज्ञा प्राप्नोति, आरम्भसामर्थ्याच्च कर्मसंज्ञापि प्राप्नोति। तदा परङ्कार्यत्वात् कर्तृसंज्ञैव प्रसज्यते इति दोषः उक्तः, प्रकृतसूत्रेण तत्र कर्मसंज्ञैव भवति न कर्तृसंज्ञेति समाहितम्। अत्र "स्वतन्त्रः कर्ता"[१०] इत्यनेन कर्तृसंज्ञा प्राप्ता, गतिबुद्धीत्यादिसूत्रस्य आरम्भसामर्थ्याच्च कर्मसंज्ञा प्राप्ता। अत्र यद् आरम्भसामर्थ्यादिति प्रतिपादितं तेनैव प्रकृतसूत्रस्य विधित्वं समर्थ्यते। तथाहि गतिबुद्ध्याद्यर्थकानां धातूनां ण्यन्तावस्थायां "कर्तुरीप्सिततमं कर्म"[११] इति कर्मत्वं प्राप्नोति, कर्तृसंज्ञाविधायकेन कर्तृत्वञ्च प्राप्तम्। तत्र परत्वादुपजीव्यत्वादन्तरङ्गत्वाच्च कर्तृसंज्ञैव प्राप्नोति। तदवस्थायां गतिबुद्धीत्यादिसूत्रस्य कर्मत्वविधायकस्य आरम्भसामर्थ्यात् कर्मसंज्ञा प्राप्ता इत्येवं विधित्वपक्षे समन्वयः। अथ यद्यस्य नियमत्वं स्वीक्रियते तर्हि प्रकृतं सूत्रं गत्याद्यतिरिक्ते पाचयत्योदनं देवदत्तेन इत्यादौ देवदत्तादेः कर्तुरीप्सितेति प्राप्तस्य कर्मत्वस्य व्यावर्तकम्। तद्व्यावर्तकत्वेन च यदा गत्यादिसूत्रं चरितार्थं तदा पुनरस्य आरम्भसामर्थ्यमिति वक्तुं न शक्यते। एवञ्च – विधित्वपक्षे एव गत्यादिसूत्रस्य आरम्भसामर्थ्यात् कर्मसंज्ञा इति भाष्यं सङ्गच्छते। अत आकडारादिसूत्रस्थभाष्यमस्य सूत्रस्य विधित्वे प्रमाणमिति विधित्वपक्षसमर्थिनामाशयः।

### विधित्वपक्षे शङ्का समाधानञ्च

ननु शाब्दबोधीयविशेष्यता यस्मिन् भवति तस्यैव शाब्दप्राधान्यमित्युच्यते। प्रकृते उत्तरदेशसंयोगानुकूल-व्यापारानुकूलव्यापारस्य शाब्दबोधीय-विशेष्यताश्रयत्वात् तस्य शाब्दप्राधान्यम्। तादृशप्रधानव्यापारानुरोधाच्च तद्धात्वर्थफलाश्रयस्य प्रयोज्यस्य कर्मसंज्ञा प्राप्नोति, ततः कर्मसंज्ञाया अपि प्राधान्यम्। प्रधानकार्यं सर्वतो बलवद्भवतीति कर्तृसंज्ञां बाधित्वा प्रयोज्यस्य कर्मसंज्ञैव प्राप्नोति। एवञ्च सिद्धायामपि कर्मसंज्ञायां पुनरारब्धं गत्यादिसूत्रं व्यर्थं सद् नियमार्थमेव। एवं सत्युच्यते यद्यपि प्रयोजकव्यापारे शाब्दबोधीय-विशेष्यताश्रयत्वलक्षणं शाब्दप्राधान्यं वर्तते, तथापि उद्देश्यत्वरूपम् आर्थप्राधान्यं प्रयोज्यव्यापारे एव। अतः प्रयोज्यव्यापारानुरोधात् प्रयोज्यस्य कर्तृसंज्ञा। अत्र उभयोरपि व्यापारयोः प्राधान्ये लब्धे कस्य बलवत्तरत्वमिति चेद् आकडारादिसूत्रस्थभाष्याद् उद्देश्यत्वरूपं यदार्थप्राधान्यं तदाश्रयस्य कार्यस्यैव प्राबल्यं स्वीकरणीयम्। अतः प्रबलप्रयोज्यव्यापारानुरोधात् प्राप्तायाः कर्तृसंज्ञायाः प्राबल्यम्। एवञ्च प्रयोज्यस्य कर्तृसंज्ञापत्तौ तां प्रबाध्यानेन सूत्रेण कर्मसंज्ञा विधीयते। अतोऽस्य विधित्वमेव उचितमित्याशयः।

### नियमत्वपक्षः

तत्र विधित्वपक्षे शङ्कितं यद् यद्यपि परत्वादुपजीव्यत्वाद् अन्तरङ्गत्वाच्च प्रयोज्यस्य कर्तृत्वमेव, तथापि शाब्दप्राधान्यस्य प्रयोजकव्यापारे एव सत्त्वात् तदनुरोधात् कर्मत्वे प्राप्ते नियमत्वमस्येति। तदा विधित्वपक्षिभिः समाहितं यत्, शाब्दप्राधान्यं यद्यपि प्रयोजकव्यापारे तथापि उद्देश्यत्वलक्षणम् आर्थप्राधान्यं प्रयोज्यव्यापारेऽस्तीति तदनुरोधात् प्रयोज्यस्य कर्तृसंज्ञैव प्राप्नोति, तां प्रबाध्य अनेन कर्मसंज्ञा विधीयते इति नियमत्वं न अपि तु विधित्वमिति।

एतदनन्तरं नियमवादिभिरुच्यते यथा उद्देश्यत्वाश्रयस्य आर्थप्राधान्यं तथैव लोके अन्यानधीनत्वाश्रयस्यापि आर्थं प्राधान्यम्, तच्च प्रयोजकव्यापारे एव विद्यते। अतोऽत्र शाब्दबोधीय-विशेष्यताश्रयत्वलक्षणस्य शाब्दप्राधान्यस्य अन्यानधीनत्वलक्षणस्य आर्थप्राधान्यस्य च प्रयोजकव्यापारे एव सत्त्वेन तदनुरोधात् प्रयोज्यस्य प्राप्ता कर्मसंज्ञा बलवती। एवञ्च कर्मसंज्ञायाः सिद्धौ पुनरपि आरब्धं गत्यादिसूत्रं नियमार्थमेव। एवम्प्रकारेण अस्य सूत्रस्य नियमत्वं साध्यते।

**नियमत्वपक्षे प्रमाणम्**

अत्रैका कारिका प्रमाणत्वेन उपस्थाप्यते –

> गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मताङ्गतः।
> नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते[१२]।। इति।

इति हरिकारिकायां नियमादिति पदमत्र प्रमाणम्। अस्याः कारिकाया उदाहरणं यज्ञदत्तो देवदत्तेन ओदनं पाचयतीति। अत्र गुणक्रियायाम् अर्थाद् अण्यन्तपचादिवाच्यक्रियायां देवदत्तादेः प्रयोज्यस्य प्राधान्यवशाद्यद्यपि कर्तृसंज्ञा प्राप्नोति तथापि प्रधानीभूतण्यन्तक्रियासन्निधौ तद्व्यापारानुरोधात् तस्य कर्मत्वमेव युक्तम्। तदा प्रयोज्यस्य देवदत्तादेः कर्मत्वप्राप्तौ प्रकृतसूत्रस्य नियामकत्वादत्र पच्-धातोः व्यावृत्तिः क्रियते। अतोऽत्र देवदत्तादेः कर्तृसंज्ञैव भवति। ततो ण्यन्तावस्थायां तृतीयारूपेण कर्तृधर्मेण पाचयत्योदनं देवदत्तेन इत्यादौ देवदत्तादिरभिधीयते इत्याशयः। तत्र गत्यादिसूत्रस्य नियमात् प्रयोज्यस्य देवदत्तादेः कर्तृत्वमिति तात्पर्यग्रहणात् प्रकृतसूत्रस्य नियमत्वे एतां कारिकामेव नियमत्वपक्षवादिन उदाहरन्ति।

**नियमत्वपक्षे शङ्का समाधानञ्च**

ननु यदि गत्यादिसूत्रस्य नियमत्वमेव तर्हि विधित्वपक्षे प्रमाणत्वेन यद् आकडारादिसूत्रस्थं भाष्यं समुदाहृतं तस्य का गतिरिति चेदुच्यते – तत्र आरम्भसामर्थ्यादिति यदुक्तं तस्य वस्तुतः नियमार्थकगत्यादिसूत्रारम्भसामर्थ्यादित्येवार्थः। अथवा ण्यन्तधातुविषयकस्य कर्तुरीप्सितेति सूत्रस्य आरम्भसामर्थ्यात् कर्मत्वं प्राप्तमिति तात्पर्यम्। अतस्तावतैव गत्यादिसूत्रस्य विधित्वं न सिध्यतीति भावः।

ननु कर्तृप्रत्ययसमभिव्याहारे यथा व्यापाराश्रयस्य कर्तुः प्राधान्यं तथा कर्मप्रत्ययसमभिव्याहारे फलाश्रयस्यापि कर्मणः प्राधान्यम्। एवञ्च फलव्यापारयोः उभयोरपि शाब्दबोधीय-विशेष्यताश्रयत्वरूपं शाब्दप्राधान्यमस्त्येव। अतः कथं प्रयोजकव्यापारे एव शाब्दप्राधान्यं समर्थ्यते, तत्र प्रयोजकव्यापारजन्यफलस्यापि प्राधान्यं स्यात्खलु। किञ्च प्रयोज्यव्यापाररूपस्य तादृशफलस्य यदि प्राधान्यं तर्हि प्रयोज्यस्य विषये कर्तृत्वस्यापि बलवत्त्वम्। अपि च, प्रयोज्यव्यापारस्य प्रेरणयैव प्रयोजकव्यापारस्य प्रवृत्तिसम्भवात् प्रयोज्यव्यापारे उद्देश्यत्वरूपम् आर्थप्राधान्यमप्यस्ति। एवमाभ्यां हेतुभ्यां प्रयोज्यस्य कर्तृसंज्ञैव प्राप्नोति, ततश्च प्रयोज्यवाचकात् कर्तृप्रत्ययापत्तिरिति दोषः। अतः प्रयोज्यस्य कर्मसंज्ञाविधानार्थं गत्यादिसूत्रारम्भ इति विधित्वमेवास्य। एवं शङ्कायां सत्यामुच्यते यद्, ण्यन्तधात्वपेक्षया शाब्दप्राधान्यं यद्यपि प्रयोज्यव्यापाररूपस्य फलस्यापि सम्भवति, उद्देश्यत्वरूपमार्थं प्राधान्यञ्च प्रयोज्यव्यापारस्य विद्यते तथापि पित्रादिषु वर्तमानं जनकत्वरूपं प्राधान्यं सर्वतो बलवदिति तदाश्रयस्य प्रयोजकव्यापारस्यैव सर्वतः

प्राधान्यमुचितम्। तदनुसारञ्च प्रयोज्यस्य कर्मसंज्ञा सिद्धेति पुनरारभ्यमाणं गत्यादिसूत्रं नियमाय कल्प्यते। एवम्प्रकारेण प्रकृतसूत्रस्य नियामकत्वमिति नवीनानां निर्णयः[१३]।

**कैयटमते विशेषः**

भाष्यप्रदीपव्याख्याकारः आचार्यः कैयटो गत्यादिसूत्रस्य नियमत्वं स्वीकरोति। परन्तु तस्य प्रतिपादनं किञ्चिद् भिन्नरूपेण दृश्यते। तथाहि "आकडारादेका संज्ञा"[१४] इति सूत्रस्य भाष्ये शङ्कितं आकडारादेका संज्ञा इत्येव पाठः स्वीकार्योऽथवा आकडारात्परङ्कार्यम् इति। उभयस्मिन्नपि पक्षे कैयटाचार्येण प्रकृतसूत्रस्य नियमत्वमेव प्रतिपादितम्। तत्र –

**(१) प्रथमपक्षः -** आकडारादेका संज्ञा इति पाठे एकसंज्ञाधिकारः प्रवर्त्यते। तस्मिन्नधिकारे कर्मसंज्ञायां सिद्धायां गत्यादिसूत्रं नियमार्थम्। तथाहि प्रयोज्यः स्वव्यापारे स्वतन्त्रः परन्तु प्रयोजकव्यापारेणैव स परिचाल्यते। अतः स्वव्यापारे स्वातन्त्र्यात् प्रयोज्यस्य कर्तृसंज्ञा प्राप्नोति, परन्तु प्रयोजकव्यापारे स्वातन्त्र्याभावात्तदा प्रयोज्यस्य कर्तृत्वं नास्ति। अपि तु प्रयोजकव्यापारजन्यफलाश्रयत्वात्तस्य कर्मत्वमेव प्राप्नोति। एवं ण्यन्तधातुविषये संज्ञाद्वयप्रसङ्गः, परन्तु एकसंज्ञाधिकाराद् अन्यतरया संज्ञया भाव्यम्। अतोऽत्र का संज्ञा स्यादिति चेत् प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यं वर्तते। ततः प्रकृते णिच्-प्रकृतिभूतो यः शुद्धधातुः तदर्थो यो व्यापारः तदपेक्षया ण्यन्तधात्वर्थो यः प्रयोजकव्यापारः तस्यैव प्राधान्यम्। एवमत्र प्रत्ययार्थस्य प्राधान्यात् प्रयोज्यव्यापारापेक्षया प्रयोजकव्यापारस्य प्राधान्यम्। तदनुसारञ्च प्रयोज्यस्य कर्मसंज्ञैव विधेया। अपि च, गुणप्रधानसन्निधौ प्रधानस्य प्रयोजकत्वे तत्र गुणाः प्रयोजकविरुद्धं कार्यं न प्रयुज्यन्ते। एवमस्मात्कारणात् प्रयोज्यस्य कर्मसंज्ञायां सिद्धायां पुनरारब्धेन प्रकृतसूत्रेण गत्यर्थादीनामेव अण्यन्तानां कर्ता ण्यन्ते कर्मसञ्ज्ञको भवति नान्येषामिति नियमः क्रियते। ततो गत्यर्थादिभिन्नानां पचादिधातूनां विषये यज्ञदत्तः देवदत्तेन ओदनं पाचयतीत्यादौ प्रयोज्यस्य न कर्मसंज्ञा अपि तु गुणक्रियानिमित्ता कर्तृसञ्ज्ञैव भवतीति बोध्यम्।

**(२) द्वितीयपक्षः -** आकडारादिति सूत्रस्य स्थाने यदि आकडारात्परङ्कार्यम् इति पाठः स्वीक्रियते तर्हि संज्ञयोरविरोधात् सर्वत्र प्रयोज्यस्य संज्ञाद्वयप्रसङ्गः[१५]। तदा गत्याद्यर्थकानां धातूनामेव ण्यन्तावस्थायां प्रयोज्यस्य संज्ञाद्वयमिति नियम्यते। अनेन नियमेन च ण्यन्तधात्वन्तरप्रयोज्यस्य कर्मसंज्ञा व्यावर्त्यते। इदानीं गत्याद्यर्थकधातूनां ण्यन्तावस्थायां प्रयोज्यस्य संज्ञाद्वयप्रसङ्गः। ततश्च यदि ण्यन्तस्थितौ प्रयोज्यस्य संज्ञाद्वयं प्रवर्त्येत तर्हि अत्रैव सूत्रे हृक्रोः धात्वोरपि ग्रहणं स्यात्, एवं हृक्रोरित्यादिसूत्रारम्भसामर्थ्यात् हृक्रोः विषये पृथग् अन्यतरस्याङ्ग्रहणसामर्थ्याच्च गत्याद्यर्थकधातूनां ण्यन्तस्थले प्रयोज्यस्य कर्मसंज्ञैव इति लभ्यते। एवम्प्रकारेण कैयटाचार्यद्वारा अस्य सूत्रस्य नियमत्वमेव प्रतिपादितम्।

**भट्टोजिदीक्षितमते विशेषः**

विध्यर्थमिदं प्रकृतं सूत्रमिति दीक्षितमते सिद्धान्तः[१६]। प्रौढमनोरमादिग्रन्थेषु यद्यपि विधित्वं नियमत्वमिति उभयथापि व्याख्यानं प्रतिपादितं तथापि प्रकृतसूत्रस्य विध्यर्थत्वे अधिकः आग्रहः प्रकाशितः। तच्च आचार्येण द्विधा प्रतिपादितम्।

**(१) प्रथमयुक्तिः** – यज्ञदत्तो देवदत्तं गमयतीत्यादौ गम्-धात्वर्थसंयोगानुकूल-व्यापारानुकूलो यः प्रेरणारूपव्यापारः, तत्प्रयोज्यस्य प्रथमव्यापाररूपफलस्य आश्रयो भवति देवदत्तः। यज्ञदत्तरूपकर्तृवृत्ति-व्यापारप्रयोज्य-फलाश्रयतया देवदत्तस्य यथा कर्मत्वं प्राप्नोति तथा शुद्धगम्-धातूपात्तव्यापाराश्रयत्वेन कर्तृत्वमपि प्राप्नोति। तत्र कर्मसंज्ञापेक्षया कर्तृसंज्ञा परा, अन्तरङ्गभूता उपजीव्या च। अतः एभिस्त्रिभिः हेतुभिः प्रयोज्यकर्तुः देवदत्तादेः कर्तृत्वमेव सम्भवति। तत्र अपूर्वतया कर्मसंज्ञाविधानात् प्रकृतसूत्रस्य विधित्वमिति प्रथमा युक्तिः।

**(२) द्वितीययुक्तिः** - अस्य नियमत्वपक्षे शाब्दप्राधान्यं प्रमाणत्वेन प्रस्तुतम्, विधित्वपक्षे च आर्थप्राधान्यस्य प्रामाण्यं निरूपितम्। प्राधान्यं समान्यतो द्विविधं भवति – शाब्दम् आर्थञ्च। आख्यातपदवाच्ये अर्थे साध्यत्वेन विधेयत्वात्तत्र यत् प्राधान्यं तच्छाब्दम्। उद्देश्यत्वस्य आश्रयणाद् यत् प्राधान्यं तदार्थप्राधान्यम्। शाब्दप्राधान्यस्य आश्रयणेन प्रयोजकव्यापारस्य प्रधानत्वे तद्दिशा कारकव्यवस्थायां प्राप्तकर्मसंज्ञस्यैव प्रयोज्यस्य कर्मसंज्ञा विधीयत इति प्रकृतसूत्रस्य नियमत्वम्। आर्थप्राधान्यस्य स्वीकारे तु प्राप्तकर्तृसंज्ञस्य प्रयोज्यस्य अपूर्वतया कर्मसंज्ञा विधीयत इति प्रकृतशास्त्रस्य विधित्वमिति द्वितीया युक्तिः। आचार्यदीक्षितेन अत्र आर्थप्राधान्यस्वीकारपुरःसरम् अस्य सूत्रस्य विधायकत्वस्वीकारः एवोचित इत्याग्रहः प्रकाशितः। अस्मिन् व्याख्याने आकडारादिसूत्रस्थं भाष्यं प्रमाणमिति विनिगमना मन्तव्या।

**नागेशभट्टमते विशेषः**

नियमार्थमिदं सूत्रमिति नागेशाचार्यस्य निर्णयः[१७]। प्रकृतसूत्रस्य नियमत्वञ्च नागेशेन द्विधा प्रतिपादितम्। तत्र -

**(१) प्रथमयुक्तिः** – अत्र आलोचनावसरे द्विविधमपि प्राधान्यं स्वीकृतम्। नागेशमते अन्यानधीनत्वरूपम् आर्थप्राधान्यं प्रयोजकनिष्ठव्यापारे विद्यते। शाब्दबोधीय-विशेष्यताश्रयस्य प्रयोजकव्यापारस्य पूर्ववत् शाब्दप्राधान्यं स्वीकृतमेव। अनया रीत्या णिजन्तस्थले उभयविधमपि प्राधान्यं प्रयोजकनिष्ठव्यापारे विद्यते। एवञ्च णिजन्तस्थले प्रधानभूतेन प्रयोजकव्यापारेणैव कारकव्यवस्था उचितेति नागेशनिर्णीतिः। तेन गमयति देवदत्तो यज्ञदत्तमित्यादौ प्रयोजकव्यापारजन्य-फलाश्रयत्वात् प्रयोज्यस्य यज्ञदत्तादेः कर्मत्वं सिद्धम्। सिद्धस्यापि कर्मत्वस्य विधये आरभ्यमाणस्य च प्रकृतसूत्रस्य नियमत्वमिति नागेशाचार्यस्य अभिमतिः। फलत्वस्य उद्देश्यत्वस्य वा आश्रयणाद् यद् आर्थप्राधान्यं तादृशं प्राधान्यमत्र न स्वीकृतमिति विशेषः। प्रकृते अन्यानधीनत्वरूपस्यैव आर्थप्राधान्यस्य स्वीकारः कृतः, तत्र हेतुमत्यादिसूत्रस्थं भाष्यं प्रमाणमिति विनिगमना बोध्या।

**(२) द्वितीययुक्तिः** - परत्वाद् अन्तरङ्गत्वाद् उपजीव्यत्वाच्च कर्मत्वापेक्षया कर्तृत्वस्य बलवत्त्वात् प्रयोज्यस्य कर्तृत्वमेवेति सूत्रस्य विधित्वपक्षे प्रतिपादितम्। परन्तु कर्मसंज्ञाविधायके सूत्रे कर्तृपदं स्वतन्त्रोपलक्षणम्, न तु संज्ञापरम्। अतः कर्तृसंज्ञाया उपजीव्यत्वाभावः। कर्मसंज्ञायाश्च प्रधानव्यापाराश्रितत्वात् प्रधानत्वस्य च सर्वतो बलवत्त्वात् कर्तृत्वनिष्ठयोः परत्वान्तरङ्गत्वयोः निष्फलत्वम्। अत्र शब्दशास्त्रत्वात् शाब्दं प्राधान्यम् अन्तरङ्गत्वादिभ्यो बलवदिति नागेशाचार्यस्य आग्रहः। अनया रीत्यापि प्रयोज्यस्य कर्मत्वमेव प्राप्तमिति तन्नियमार्थं प्रकृतं शास्त्रमिति नागेशाचार्यमते सिद्धान्तः।

**भर्तृहरेः निर्णयः**

प्रकृतसूत्रस्य नियमत्वमिति भर्तृहरेः सिद्धान्तः[१८]। गत्यर्थादिधातुविषये एव प्रयोज्यः कर्मसंज्ञको भवति नान्यत्र इति चात्र नियमाकारः। पूर्वम् उद्धृते गुणक्रियायामित्यादिश्लोके नियमादिति पदमत्र प्रमाणं बोध्यम्। प्रयोज्यः प्रयोजकव्यापारे

परतन्त्रो भवति, परन्तु स्वव्यापारे स्वतन्त्रः एव भवति। तथा च, प्रयोजकव्यापारदिशा यथा कर्मत्वं प्राप्नोति तथा स्वव्यापारदिशा प्रयोज्यस्य कर्तृत्वमपि प्राप्नोति। तत्र परत्वात् कर्तृसंज्ञैव स्यादिति शङ्कितम्। परन्तु धातुवाच्य-प्रयोज्यव्यापारस्य ण्यर्थप्रेरणायां विशेषणत्वाद् अप्राधान्यम्, णिज्-वाच्यस्य प्रेरणारूपस्य प्रयोजकव्यापारस्य च सर्वथा प्राधान्यम्। ततः प्रयोज्यस्य विषये प्रधानभूत-प्रयोजकव्यापारानुरोधि कर्मत्वमेव प्राप्नोतीति समाहितम्। इत्थं प्राप्तमेव कर्मत्वं नियम्यते प्रकृतसूत्रेण इति भर्तृहरेः सिद्धान्तः।

**महर्षिपतञ्जलेः सिद्धान्तः**

अस्मिन् विषये स्थलद्वये भाष्यकृता विचारः कृतः।

**(१) प्रथमस्थलम्** - आकडारादिसूत्रे आकडारात्परङ्कार्यम् इति पाठे स्वीकृते ण्यन्तानां गत्यर्थादीनां प्रयोज्यस्य विषये आरम्भसामर्थ्यात् कर्मसंज्ञा परङ्कार्यत्वाच्च कर्तृसंज्ञा प्राप्तेति संज्ञाद्वयप्रसङ्गरूपो दोषः आशङ्कितः। तदा हृक्रोरित्यादिसूत्रारम्भसामर्थ्यात् तत्र अन्यतरस्याङ्ग्रहणसामर्थ्याच्च नात्र संज्ञद्वयप्रसङ्गः, अपि तु कर्मत्वमेवेति दोषो निराकृतः। प्रदीपे उद्योते चास्य व्याख्यानावसरे कैयटेन नागेशेन च प्रकृतसूत्रस्य नियमत्वं प्रतिपादितम्। किन्तु भाष्यकृतात्र विधित्वमुत नियमत्वमिति विषये स्पष्टं न सङ्केतितम्। एतदनुसारं प्रकृतसूत्रस्य विधित्वेन अथवा नियमत्वेनेति उभयथापि प्रतिपादनं सम्भवति।

**(२) द्वितीयस्थलम्** - हेतुमति च[११] इति सूत्रं द्वितीयस्थलम्। णिजन्तप्रसङ्गे ण्यर्थस्य प्राधान्ये सति के दोषाः सम्भवन्तीति भाष्यकृता अत्र आलोच्यते। पाचयत्योदनं देवदत्तेन इत्यत्र ण्यर्थस्य प्राधान्यात् तद्व्यापारेण ईप्सिततमत्वात् प्रयोज्यकर्तुः कर्मसंज्ञा प्राप्नोतीति दोषः उक्तः। प्रकृतसूत्रकृतनियमेन तत्र प्रयोज्यस्य कर्तृत्वमेव न कर्मत्वमिति समाहितम्। तत्र भाष्ये सूत्रस्य नियमार्थत्वं प्रतिपादितम्। अस्मात् प्रमाणात् भाष्यमते प्रकृतसूत्रस्य नियमत्वमिति प्रतिपादयितुं शक्यम्। आकडारादि-सूत्रस्थभाष्ये प्रकृतसूत्रस्य आरम्भसामर्थ्यं व्याख्यातम्, तद्दिशा अस्य विधित्वं वाच्यम्। परन्तु तत्र वर्णितस्य आरम्भसामर्थ्यस्य गतिबुद्धीत्यादि-नियमारम्भ-सामर्थ्यमिति आशयो नागेशेन व्याख्यातः। अतो भाष्यदिशा प्रकृतसूत्रस्य नियमत्वमेवेति सिद्धान्तो लभ्यते।

**विमर्शः**

गतिबुद्धीत्यादिसूत्रस्य विधित्वमुत नियमत्वमिति विचारितम्। अत्र विधित्वनियमत्वयोः विचारे कः क्रमः इति विषये परिष्कृतो बोधः आवश्यकः। भर्तृहरिणा भाष्यकारैश्च अस्य नियमत्वमेव प्रतिपादितम्, तच्च कैयटाचार्येणापि समर्थितम्। भट्टोजिदीक्षितेन तु स्वग्रन्थे अस्य सूत्रस्य विधित्वं नियमत्वमिति उभयमपि समर्थितम्, विधित्वपक्षे च पृथग् विचारः कृतः। तदनु नागेशाचार्येण स्वग्रन्थे विधित्वपक्षस्य खण्डनं कृतम्, नियमत्वपक्षस्य च सिद्धान्तत्वेन प्रतिपादनं कृतम्। अस्य सूत्रस्य विधित्वपक्षे युक्तयः सन्ति, तत्र सम्भाव्यानां शङ्कानां समाधानमपि विद्यते। तथा नियमत्वपक्षेऽपि युक्तयः प्रतिपादिताः, सम्भावितानां दोषाणां निराकरणमपि अवलोकितम्। अनयोः कतरो युक्त इति विषये सम्प्रति विमर्शः प्रस्तूयते।

(१) क्रियाजनकानामेव कारकत्वं सम्भवति। अतः कस्यापि पदार्थस्य कर्तृत्वकर्मत्वादिनिर्णये क्रियाया अर्थाद् व्यापारस्य अपेक्षा भवति। प्रेषणाद्यर्थे विधीयमानस्य णिचः प्रयोगस्थले च व्यापारद्वयं लभ्यते, प्रयोजकवृत्तिव्यापारः प्रयोज्यवृत्तिव्यापारश्च। प्रयोज्यवृत्तिव्यापारः आश्रीयते चेद् अण्यन्तकर्तुः कर्तृत्वं प्रसज्यते, प्रयोजकवृत्तिव्यापारः

आश्रीयते चेद् अण्यन्तकर्तुः कर्मत्वं प्राप्नोति। अथेदानीं को व्यापारः आश्रयणीय इति विषये एव प्रधानतो वैमत्यम् अवलोक्यते।

(२) प्रयोज्यकर्तुः सर्वथा कर्तृत्वमेव प्राप्नोति तत्प्रबाध्य अपूर्वतयैव तस्य कर्मत्वं विधीयते इति विधित्वसमर्थिनां मतम्। तत्र कर्तृकर्मसंज्ञयोः कर्तृसंज्ञा परा, कर्तृसंज्ञा अन्तरङ्गभूता, कर्तृसंज्ञैव उपजीव्या च। अतः परत्वाद् अन्तरङ्गत्वाद् उपजीव्यत्वाच्च प्रयोज्यस्य कर्तृसंज्ञैव उचितेति तेषामाशयः। परन्तु प्रधानाप्रधानयोः स्थले परत्वान्तरङ्गत्वोपजीव्यत्वानां प्रयोजकत्वं न दृश्यते। अन्तरङ्गभूतान्यपि अमात्यादिकार्याणि प्रधानेन राजादेशेन यथा बाध्यन्ते तथैव अत्र प्रधानत्वेन परत्वादिहेतवो निराक्रियन्ते। किञ्च कर्मसंज्ञाविधायके सूत्रे कर्तृपदं स्वतन्त्रोपलक्षकम्, अतः कर्तृसंज्ञायाः कर्मसंज्ञोपजीव्यत्वं नास्तीत्यपि अवधेयम्। तथा च प्रकृते प्रयोजकव्यापारे शाब्दबोधीय-विशेष्यताश्रयत्वरूपं शाब्दप्राधान्यं विद्यते। अतः प्रधानभूतं प्रयोजकव्यापारमाश्रित्यैव णिजन्तस्थले कारकाणां प्रवृत्तिरिति लभ्यते। तदनुसारं प्रयोज्यकर्तुः कर्मत्वमेव प्राप्नोति। एवञ्च सिद्धस्यैव कर्मत्वस्य सिद्धये आरभ्यमाणस्य प्रकृतस्यास्य विधेः नियमत्वमिति आचार्यनागेशादीनाम् अभिमतिः।

(३) अत्र प्रयोजकव्यापारस्य यथा शाब्दप्राधान्यमस्ति तथा प्रयोज्यव्यापारस्यापि आर्थप्राधान्यं विद्यते। तथा च प्रयोज्यव्यापारानुसारं प्रयोज्यकर्तुः कर्तृत्वमेव प्राप्तम्। अपि च, कर्मसंज्ञाविधायके सूत्रे कर्तृपदं स्वतन्त्रोपलक्षकम्, तेन यद्यपि कर्तृसंज्ञायाः कर्मसंज्ञोपजीव्यत्वाभावस्तथापि परत्वान्तरङ्गत्वयोः सुवचत्वेन प्रयोज्यस्य प्रसङ्गे परत्वादन्तरङ्गत्वाच्च प्राप्तायाः कर्तृसंज्ञायाः बाधनार्थं प्रकृतसूत्रमिति युक्तमेव। एवंरीत्या प्रकृतसूत्रस्य विधित्वमेव इति दीक्षितानाम् आशयः।

(४) शाब्दप्राधान्यस्य स्वरूपमुक्तं शाब्दबोधीय-विशेष्यताश्रयत्वमिति। आर्थप्राधान्यस्य किं स्वरूपमिति विषये मतद्वयं लभ्यते। तत्र उद्देश्यत्वम् आर्थं प्राधान्यमिति प्रथममतम्, अन्यानधीनत्वम् आर्थप्राधान्यमिति द्वितीयमतम्। तत्र उद्देश्यत्वरूपम् आर्थप्राधान्यमाश्रीयते चेत् प्रयोज्यव्यापारस्य प्रधानत्वं लभ्यते, तदनुसारं कारकव्यवस्थायां सत्यां प्रयोज्यकर्तुः कर्तृत्वं प्राप्नोति। अन्यानधीनत्वरूपम् आर्थप्राधान्यमाश्रीयते चेत् प्रयोजकव्यापारस्य अन्यानधीनत्वात् तत्रैव आर्थप्राधान्यं लभ्यत इति प्रयोजकव्यापारस्य प्रधानत्वेन लाभः सम्भवति। शाब्दप्राधान्यमत्र विद्यत एव। अथ तदनुसारं यदि कारकव्यवस्था क्रियते तर्हि प्रयोज्यकर्तुः कर्मत्वमेव सम्भवति। अपि च, कर्तृत्वे परत्वान्तरङ्गत्वयोः सत्त्वेऽपि कर्मत्वस्य प्रधानत्वलाभात् प्रधानस्य च सर्वतो बलवत्त्वात् प्रयोज्यस्य कर्मत्वमेव प्राप्नोति। प्राप्तस्यैव कर्मत्वस्य विधायकत्वात् प्रकृतसूत्रस्य तदा नियमत्वं लभ्यते।

(५) एवञ्च प्रकृतसूत्रस्य विधित्वनियमत्वविषये विचारे सति अत्र उभयथापि प्रतिपादयितुं शक्यते। शाब्दबोधीय-विशेष्यताश्रयत्वरूपस्य शाब्दप्राधान्यस्य स्वीकारे प्रयोजकव्यापारस्य प्रधानत्वम्। तदनुसारं निर्वाहे प्रयोज्यकर्तुः कर्मत्वं प्राप्तमिति प्रकृतविधेः नियमत्वम्। उद्देश्यत्वरूपस्य आर्थप्राधान्यस्य स्वीकारे प्रयोज्यव्यापारस्य प्रधानत्वम्, तदनुसारं निर्वाहे प्रयोज्यकर्तुः कर्तृत्वमेव प्राप्तमिति प्रकृतसूत्रस्य विधित्वम्। अथ यदि अन्यानधीनत्वरूपस्य आर्थप्राधान्यस्य स्वीकारस्तर्हि प्रयोजकव्यापारस्य प्राधान्येन तद्दिशा प्रयोज्यकर्तुः कर्मत्वप्राप्तेः प्रकृतसूत्रस्य नियमत्वं लभ्यते। अनया रीत्या प्रकृतस्य गतिबुद्धीत्यादिसूत्रस्य विधित्वं नियमत्वमिति उभयथापि प्रतिपादयितुं शक्यते।

(६) प्रकृतसूत्रविषये विधित्वं नियमत्वमिति उभयमपि प्रतिपादयितुं शक्यते। तथापि नियमत्वपक्षे विदुषाम् अधिक आग्रहो दृश्यते। यत्र प्राधान्यं विद्यते तत्र परत्वादीनां प्रयोजकत्वं न सम्भवति, प्रधानाप्रधानयोः प्रधानस्यैव सर्वत्र

प्रयोजकत्वेन आश्रयो भवति। सम्प्रति विधित्वपक्षे उद्देश्यत्वरूपम् एकमेव आर्थप्राधान्यं दृश्यते। नियमत्वपक्षे यथा अन्यानधीनत्वरूपम् आर्थप्राधान्यं विद्यते तथा शाब्दबोधीय-विशेष्यताश्रयत्वरूपं शाब्दप्राधान्यमपि विद्यते। अत उभयविधस्यापि प्राधान्यस्य उपलब्धेः अस्मिन् नियमत्वपक्षे एव विदुषाम् अधिकः आदर इति प्रतीयते। एवम् अधिकबलवत्त्वाद् गतिबुद्धीत्यादिसूत्रस्य नियमत्वपक्षः एव स्वीकरणीयः इति विमर्शसारो लभ्यते।

**उपसंहारः**

"गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ"[२०] इति प्रसिद्धं कर्मसंज्ञाविधायकं सूत्रम्। अस्य विधित्वमुत नियमत्वमिति विषये प्रकृतप्रबन्धे विचारः प्रस्तुतः। अत्र विधित्वपक्षस्य समर्थनाय भट्टोजिदीक्षितमतम् उपस्थापितम्, नियमत्वपक्षे च प्रमाणत्वेन आचार्यनागेशस्य कैयटाचार्यस्य च मतं प्रस्तुतम्। यद्यपि दीक्षितेन प्रकृतसूत्रस्य नियमत्वमपि प्रस्तुतम्, नागेशेन च विधित्वमपि प्रस्तुतम्; तथापि तत्र तत्र पक्षे तत्तदाचार्याणाम् आग्रहो दृश्यते इति यथाग्रहमेव अत्र प्रबन्धे मतानि प्रस्तुतानि। अन्ते च भर्तृहरिदिशा भाष्यकारदिशा च विमर्शः उपस्थापितः। अत्र युक्तत्वायुक्तत्वे विद्वांसः एव प्रमाणमिति विनिवेद्य अत्रैव विरम्यते इति शम्।

**संकेतपञ्जिः**

पा.सू. = पाणिनीयसूत्रम्

प्रौ.म. = प्रौढमनोरमा

वा.प. = वाक्यपदीयम्

ल.श.शे. = लघुशब्देन्दुशेखरः

सम्पा. = सम्पादकः

**उल्लेखपञ्जिः**

१. पा.सू. ०१।०४।४९

२. *तदेव* ०१।०४।५२

३. *तदेव* ०१।०४।४९

४. *तदेव* ०३।०१।२६

५. प्रौ.म. पत्राङ्कः-८५७

६. पा.सू. ०१।०४।४९

७. *तदेव* ०१।०४।५४

८. तदेव ०१/०४/४९

९. *तदेव* ०३।०१।२६

१०. *तदेव* ०१।०४।५४

११. *तदेव* ०१।०४।४९

१२. वा.प.-०३.०७.१२७

१३. द्रष्टव्यम्, ल.श.शे., पत्राङ्कः-६५८

१४. पा.सू. ०१।०४।०१

१५. द्रष्टव्यम्, म.भा., पत्राङ्कः-१९७

१६. द्रष्टव्यम्, प्रौ.म., पत्राङ्कः-८५७

१७. द्रष्टव्यम्, ल.श.शे., पत्राङ्कः-६७६

१८. गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मताङ्गतः।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते।। (वा.प.-०३/०७/१२७)

१९. पा.सू. ०३/०१/२६

२०. *तदेव* ०१।०४।५२

**परिशीलितग्रन्थपञ्जिः**


नागेशभट्टः। *लघुशब्देन्दुशेखरः* (षट्टीकोपेतः अव्ययीभावान्तो भागः)। भार्गव पुस्तकालयः, १९९२।

भट्टोजिदीक्षितः। *प्रौढमनोरमा* (शब्दरत्न-भैरवी-भावप्रकाश-सहिता)। सम्पा. पं. गोपालशास्त्री नेने। चौखम्भा संस्कृत भवन, २०१८।

भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी* (मूलमात्रम्)। सम्पा. गोविन्दाचार्यः। चौखम्बा सुरभारती प्रकाशन, २०१७।

___। *वैयाकरणसिद्धान्तकौमुदी* (प्रथमो भागः)। सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। मोतीलाल बनारसीदास, २०१४।

___। *वैयाकरणसिद्धान्तकौमुदी* (द्वितीयो भागः)। सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। मोतीलाल बनारसीदास, २०१४।

भर्तृहरिः। *वाक्यपदीयम्* (अम्बाकर्त्रीव्याख्योपेतम्, तृतीयो भागः)। सम्पा. पण्डितश्रीरघुनाथशर्मा। सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, २०१६।

महर्षिपतञ्जलिः। *महाभाष्यम्* (तृतीयं खण्डम्, प्रदीपोद्योतसहितम्)। सम्पा. श्रीभार्गवशास्त्री। चौखम्बा संस्कृत प्रतिष्ठान, २०१४।

# अविवक्षितकारकस्य कर्मसंज्ञाविमर्शः

प्रीतम-बेरा

**सारसंक्षेपः**

कर्मसंज्ञाविधायकशास्त्रेषु आन्यतम्यं भजते अकथितं चेति सूत्रम्। अपादानादिकारकाणाम् अपादानत्वादिना अविवक्षायां कर्मसंज्ञा विधीयतेऽनेन। अयमेव विचारो मदीयप्रबन्धस्य विषयतामेति। अकथितशब्दस्य रूढयौगिकयोर्मध्ये कतरोऽर्थः प्रकृते ग्राह्यः इति प्रश्ने अविवक्षितरूपयौगिकार्थोऽङ्गीक्रियते। प्राप्तिपूर्वक-अप्राप्तिपूर्वकेत्युभयविध-अविवक्षास्थले प्रकृतसूत्रप्रवृत्तिर्भवति। प्रकृतसूत्रविहितकर्मसंज्ञाप्रयोज्यद्वितीयायाः अर्थविषये प्राचीननवीनयोर्मतभेदो दरीदृश्यते। तत्र सम्बन्धोऽर्थः प्राचीनमते, कर्मत्वशक्तिमान् अर्थश्च नवीनमते। नागेशाचार्येण प्राचीनमतं पूर्वपक्षयित्वा सयुक्ति नवीनमतं सिद्धान्तितम्। सोऽपि विषयो यथामति आलोचितः प्रकृतप्रबन्धे। एवञ्च प्रकृतसूत्रप्रवृत्तौ षोडशधातूनां परिगणनात् तदितरधातूनां प्रयोगे न प्रकृतसूत्रेण कर्मसंज्ञा। तत्र परिगणितानां दुहादिधातूनाम् एकव्यापारवाचकत्वं व्यापारद्वयवाचकत्वं चेति पक्षद्वयं वर्तते। तत्र एकव्यापारवाचकत्वपक्षे कर्तुरिति सूत्रविहितकर्मणः प्रधानत्वं, अकथितं चेति सूत्रविहितकर्मणः गौणत्वम्। तस्मिन् पक्षे गौणे कर्मणि लकारा विधीयन्ते। व्यापारद्वयवाचकत्वपक्षे तु गवादीनां प्रधानकर्मत्वं, पयआदीनां च गौणकर्मत्वम्। अस्मिन् पक्षे प्रधानकर्मणि लकारा विधीयन्ते। एते समेऽपि विचाराः यथामति प्रबन्धेऽस्मिन् आलोचिताः।

**कुञ्चिकाशब्दः**

अकथिम्, कर्म, अविवक्षा, कर्मयुक्, कारकम्।

अवयवषट्कयुतेऽस्मिन् कारकचक्रे आन्यतम्यं भजते हि कर्मकारकम्। अष्टाध्याय्यां कर्मसंज्ञाविधायकानि दश[१] सूत्राणि राजन्ते। तेषु अविवक्षितकारकस्य कर्मसंज्ञां विदधत् अकथितं[२] च इति सूत्रं स्ववैशिष्ट्यमावहति। अष्टाध्याय्याः प्रथमाध्यायस्य चतुर्थपादस्य एकपञ्चाशत्तमं सूत्रमदः। अनेन अविवक्षितकारकाणां कर्मसंज्ञायां धातूनां द्विकर्मकत्वं सञ्जायते।

कथ वाक्यप्रबन्धे[३] इति चौरादिकाद्धातोः क्तप्रत्यये कथितशब्दो निष्पद्यते। न कथितम् अकथितमिति नञ्तत्पुरुषः। अकथितशब्दः प्रकृते अविवक्षितार्थपरो वर्तते। तत्र केन अविवक्षितम् इति करणाकाङ्क्षायां सामान्येन कारकशब्देन अपादानादिविशेषैर्वा इत्युभयोरुपस्थितौ महर्षिपतञ्जलिना भाष्ये अपादानादिविशेषैरिति समाहितम्। तथाहि भाष्यम् – "केनाऽकथितम्, अपादानादिभिर्विशेषकथाभिः" इति। अत एव सूत्रवृत्तिः प्रोक्ता भट्टोजिदीक्षितेन - "अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्याद्" इति। गां दोग्धि पयः इत्युदाहरणम्। अत्र दुह्धातूपात्तविभागजनकव्यापारानाश्रयत्वाद् गोरपादानत्वम्, परन्तु प्रकृते तदपादानत्वस्याविवक्षायां प्रकृतसूत्रेण गोः कर्मसंज्ञा विधीयते। पयसस्तु दुह्धातुवाच्यव्यापारजन्यविभागरूपफलाश्रयत्वात् कर्तुरीप्सिततमं कर्म इत्यनेन कर्मत्वम्। एवम् उभयोरपि कर्मत्वात् कर्मणि द्वितीया इत्यनेन उभयत्रापि द्वितीयासिद्धिः। अत्रेदं बोध्यं यत् तत्तत्कारकत्वेनाविवक्षायामेवानेन कर्मसंज्ञा, अपादानत्वादिविवक्षायां तु तत्तत्कारकप्रयोज्यविभक्तौ गोः दोग्धि पयः इत्यादि वाक्यमपि सिध्यति।

**अकथितशब्दार्थः**

सूत्रघटकोऽकथितशब्दोऽयम् अविवक्षितार्थे यौगिकः, अप्रधानार्थे च रूढो वर्तते। तत्र रूढिं परित्यज्य यौगिकार्थग्रहणे किं विनिगमकमिति शङ्कायामुच्यते अकथितशब्दस्य अप्रधानार्थकत्वस्वीकारे अप्रधानस्य कर्मसंज्ञायां गां दोग्धि पयः इत्यादौ उद्देश्यताश्रयस्य पयसः प्रधानत्वाद्, गोश्च अप्रधानत्वात् प्रकृतसूत्रेण गोः कर्मसंज्ञायां ततो द्वितीयायां गां दोग्धि पयः इत्येव वाक्यं भवेत्। तथा सति गोः दोग्धि पयः इति इष्टप्रयोगस्य असिद्धिप्रसङ्गः। अकथितशब्दस्य अविवक्षितार्थकत्वे तु अपादानत्वाद्यविवक्षायां गां दोग्धि पयः इति प्रयोगः, अपादानत्वादिविवक्षायां तु गोः दोग्धि पयः इति चोभयप्रयोगसिद्धिः। अपरं विनिगमकं तावद् रूढिस्थले प्रश्नप्रतिवचनाभावाद् भाष्यकारकृतयोः प्रश्नप्रतिवचनयोरसङ्गतिप्रसङ्ग इति। यथा गच्छतीति गौरिति व्युत्पत्तावपि सास्नादिमदर्थे गोशब्दो रूढो वर्तते। तत्र गच्छतीत्युक्ते केनेति प्रश्नः, रथेनेति प्रतिवचनं च सम्भवतः। परन्तु गौरित्युक्ते प्रश्नप्रतिवचने च न भवतः। एवम् अकथितशब्दस्य रूढ्या अप्रधानार्थकत्वे महर्षिकृतस्य केनेति प्रश्नस्य अपादानादिभिरिति प्रतिवचनस्य च असाङ्गत्यं स्यादित्याशयः। अतः अविवक्षितार्थक एव अकथितशब्दः प्रकृते गृह्यते।

**उभयविध-अविवक्षास्थले सूत्रप्रवृत्तिः**

अविवक्षा तावद् द्विविधा भवति, प्राप्तिपूर्विका अविवक्षा, अप्राप्तिपूर्विका अविवक्षा चेति। तत्रोभयत्रैव प्रकृतसूत्रप्रवृत्तिरिति बोध्यम्। प्राप्तायाः अपादानादिसंज्ञायाः अविवक्षा प्राप्तिपूर्विका अविवक्षा। यथा गां दोग्धि पयः इत्यत्र गोः अपादानसंज्ञा प्राप्ता, तदविवक्षायां तां संज्ञां प्रबाध्य कर्मसंज्ञा भवति। अतोऽत्र अपादानस्य प्राप्तिपूर्विकाविवक्षा वर्तते। बलिं याचते वसुधाम् इत्यत्र बलेः न कापि संज्ञा प्राप्ता, अतस्तत्र सम्बन्धत्वेन प्राप्तायाः षष्ठ्या बाधेन प्रकृतसूत्रेण कर्मसंज्ञायां द्वितीया भवति। इयं हि अप्राप्तिपूर्विका अविवक्षा। उभयविध-अविवक्षास्थले प्रकृतसूत्रप्रवर्तनादेव नागेशेनोक्तं लघुशब्देन्दुशेखरे - "एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोध्यम्" इति।

**प्रकृतकर्मसंज्ञाप्रयोज्यद्वितीयाया अर्थनिर्णयः**

दीक्षितादीनां प्राचीनवैयाकरणानां मते अकथितं च इति कर्मसंज्ञाप्रयोज्यद्वितीयायाः सम्बन्धोऽर्थः। तथाहि गां दोग्धि पयः इत्यादौ पयसः कर्तुरीप्सिततमं कर्म इत्यनेन, गोश्च तथायुक्तं चानीप्सितम् इत्यनेन कर्मसंज्ञासम्भवे पूर्वोक्तसूत्राभ्यामेव अकथितं च इत्यस्य गतार्थत्वात् तस्य व्यर्थतामाशङ्क्य तैर्दीक्षितादिभिः समाहितं यत् माषाणामश्नीयाद् इतिवत् कर्मणः शेषत्वेन विवक्षायां षष्ठी शेषे इति प्राप्तां षष्ठीं बाधितुम् अकथितं च इति सूत्रारम्भः। एवं षष्ठीबाधकत्वेन न प्रकृतसूत्रस्य व्यर्थताप्रसङ्गः। अतोऽत्र अपवादत्वेन षष्ठीं प्रबाध्य कर्मसंज्ञाविधानात् तत्संज्ञाप्रयोज्यद्वितीयाः षष्ठीवत्सम्बन्धः अर्थः। तेन गां दोग्धि पयः इत्यत्र गोसम्बन्धि-पयःकर्मक-दोहनानुकूलव्यापारः इत्येवं शाब्दबोधस्तेषां मते।

नागेशाचार्येण तु तत्प्राचीनमतं निरसयता अत्रापि द्वितीयायाः कर्मत्वशक्तिमत्त्वरूपार्थः सिद्धान्तितः। तथाहि तन्मते षष्ठ्यपवादत्वमात्रेण कर्मसंज्ञाप्रयोज्यद्वितीयायाः सम्बन्धार्थकत्वस्वीकारे ध्रुवमपायेऽपादानम्, कर्मणा यमभिप्रैति स सम्प्रदानम् इत्यादीनामभावे सर्वत्रैव षष्ठी शेषे इति षष्ठीप्राप्तौ तदपवादत्वेन अपादानादिसंज्ञाविधौ अपादानादिसंज्ञाप्रयोज्यपञ्चम्यादीनाम् अपि सम्बन्धार्थकत्वं स्यात्। परन्तु तासां पञ्चम्यादिविभक्तीनां सम्बन्धार्थकत्वं तु न युज्यत एव। अतः केवलम् अपवादत्वमात्रेण यथा पञ्चम्यादीनां न सम्बन्धार्थकत्वं तद्वत् प्रकृतेऽपि अकथितं च इति सूत्रविहितकर्मसंज्ञाप्रयोज्यद्वितीयाया अपि सम्बन्धार्थकत्वं न वाच्यम्। तस्मात् नागेशमते

प्रकृतस्थले द्वितीयायाः कर्मत्वशक्तिमानर्थः। उक्तं हि नागेशेन -"कारकत्वव्याप्यसंज्ञानां स्वबोध्यार्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात्" इति। तेन गां दोग्धि पयः इत्यत्र गोकर्मक-पयःकर्मक-दोहनानुकूलव्यापारः इत्येवं शाब्दबोधः। अपि च कर्तुरीप्सिततमं कर्म इति अकथितं च इति च सूत्राभ्यां कर्मसंज्ञायां कर्मणि द्वितीया इत्यनेन द्वितीयाविभक्तिर्विधीयते। तत्र कर्तुरीप्सिततमं कर्म इति सूत्रविहितकर्मसंज्ञाप्रयोज्यद्वितीयायाः कर्मत्वशक्तिमत्त्वरूपार्थकत्वे, अकथितं च इति सूत्रविहितकर्मसंज्ञाप्रयोज्यद्वितीयायाः सम्बन्धार्थकत्वे च कर्मणि द्वितीया इत्यस्य वैरूप्यं भवेद् एकार्थोपस्थापकत्वाभावात्।

अपि च प्रकृते द्वितीयायाः सम्बन्धार्थकत्वे भाष्यस्थः शङ्कासमाधानयुतो ग्रन्थश्च असङ्गच्छेत। तथाहि भाष्ये अकथितं कर्म इत्येवं सूत्रे कृते, हरिं भजति चोरान् पश्यति इत्यादौ तेनैव ईप्सितानीप्सितयोः कर्मत्वसिद्धौ कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितम् चेति सूत्रयोः वैयर्थ्यशङ्कायां समाधानं प्रदत्तं यत् ईप्सितानीप्सितयोः अनेनैव कर्मसंज्ञायां वारणार्थानामीप्सितः इति सूत्रविषयेऽपि तत्प्रवृत्त्या वारणार्थानामीप्सितः इत्यस्य निरवकाशत्वेन तदपवादत्वात् अग्नेर्माणवकं वारयति इत्यत्र अग्निमाणवकयोरुपभयोरपि ईप्सितत्वेन परमपि कर्मत्वं बाधित्वा अपवादत्वेन अपादानसंज्ञायाम् उभयत्रापि पञ्चम्याम् अग्नेर्माणवकाद् वारयति इति अनिष्टप्रयोगापत्तिर्दोषः। अतस्तद्वारणाय पूर्वोक्तसूत्रद्वयारम्भः। कर्तुरीप्सिततमं कर्म इति सूत्रारम्भाद् ईप्सितेप्सिततमयोर्विषयविभागे सम्प्राप्ते ईप्सिततमस्य माणवकस्य कर्तुरित्यनेन कर्मसंज्ञा, ईप्सितस्य अग्नेः वारणार्थानामिति अपदानसंज्ञा इति विषयभेदात् न कोऽपि दोषावसरः इति समाधानाशयः। तथायुक्तं चानीप्सितम् इति तु द्वेष्योदसीनयोः संग्रहाय आरब्धमिति बोध्यम्। परन्तु अकथितं च इति कर्मसंज्ञायां, तत्र विधीयमानायाः द्वितीयायाः सम्बन्धार्थकत्वे कर्तुरीप्सिततमं कर्म इति कर्मसंज्ञायां, तत्र द्वितीयायाः च कर्मत्वे तु द्वयोः सूत्रयोः फलभेदात् कर्तुरीप्सिततमं कर्म इति स्थाने अकथितं च इत्यनेन कार्यसिद्धिः इत्येवम् भाष्यकारकृता आशङ्का, तत्समाधानं च अयुक्तं भवेत्।

अपि च भाष्यकारेण दुहादिधातूनां व्यापारद्वयार्थकत्वमङ्गीकृत्य अकथितं च इति सूत्रस्य प्रत्याख्यानं विहितम्। तथाहि दुह्-धातोः विभागानुकूलव्यापारानुकूलव्यापारः अर्थः। तत्र प्रधानीभूतो व्यापारः गोपनिष्ठः, तज्जन्यविभागानुकूलव्यापररूपं फलं गोनिष्ठम्, अथ च गोनिष्ठव्यापारजन्यविभागरूपं फलं पयोनिष्ठम्। एवं फलाश्रयत्वात् गोः पयसः च कर्तुरीप्सिततमं कर्म इत्यनेनैव कर्मसंज्ञा सिध्यति। अतः अकथितं च इति प्रत्याख्यातम्। "फलैक्ये प्रत्याख्यानं वरं, न तु फलभेदे" इति नियमः। अकथितं च इति कर्मसंज्ञाप्रयज्यद्वितीयायाः सम्बन्धार्थकत्वे, कर्तुरीप्सिततमं कर्म इति कर्मसंज्ञकाप्रयोज्यद्वितीयायाश्च कर्मत्वशक्तिमत्त्वार्थकत्वे, फलैक्याभावात् प्रत्याख्यानम् अयुक्तं भवेत्। परन्तु भाष्यकारेण दुहादीनां व्यापारद्वयार्थत्वस्वीकृतिपूर्वकं प्रत्याख्यानं विहितम्। एतेन ज्ञायते यत् अकथितं च इति कर्मसंज्ञाप्रयोज्यद्वितीयायाः कर्मत्वशक्तिमान् इत्येवार्थः, न तु सम्बन्धः इति।

### प्रकृतसूत्रप्रवृत्तिनिमित्तानां धातूनां परिगणनप्रयोजनम्

पूर्वविधिविषयप्रसक्तिपूर्वकाविवक्षायां प्रकृतसूत्रप्रवृत्तेः नटस्य शृणोति इत्यत्रापि नटस्य पूर्वविधिविषयत्वाभावात् प्रकृतसूत्रेण तस्य कर्मसंज्ञापत्तिरिति शङ्का समापन्ना। न च कारकाधिकारात् कारकत्वे सत्येव प्रकृतसूत्रेण कर्मसंज्ञाविधानात्, नटस्य कारकत्वाभावात् कर्मसंज्ञाप्राप्त्यभावो वाच्यः, क्रियाजनकं कारकम् इति सिद्धान्तानुसारं नटं विना गाथाश्रवणासम्भवात् नटस्य गाथाद्वारा क्रियाजनकत्वसत्त्वेन तस्यापि कारकत्वाक्षुण्णत्वाद्। अतः प्रागुक्तशङ्का तदवस्थैव। नटस्य शृणोति इत्यस्मिन्प्रयोगे नटस्य पूर्वविधिविषयत्वाभावमनङ्गीकुर्वाणानां केषाञ्चिन्मते श्रुधातोः निस्सरणविशिष्टश्रवणार्थकत्वात् प्रकृतवाक्यस्य नटान्निःसरन्तीं गाथां शृणोति इत्यर्थलाभाद्

नटस्य अवधित्वेन प्राप्तापादानत्वस्य अविवक्षायां प्रकृतसूत्रेण कर्मसंज्ञाप्राप्तिः, अतः प्रकृते प्राप्तिपूर्वकाविवक्षायां सूत्रप्रवृत्तिशङ्का इति शङ्कातात्पर्यम्। परन्तु प्राप्तापादानत्वाविवक्षामतस्यास्य अयुक्तत्वम्। यतो हि आख्यातोपयोगे इत्यस्मिन् सूत्रे भाष्ये महर्षिपतञ्जलिना उपयोगपदस्य नियमपूर्वकविद्यास्वीकारार्थकत्वाङ्गीकारेण प्रकृते तथात्वाभावान्न अपादानत्वप्राप्तिः। अतः नटस्य शृणोति इत्यत्र कस्यापि पूर्वविधेरप्रसक्त्या प्रकृतसूत्रप्रवृत्तिः इत्येव यथार्थशङ्का।

एतच्छङ्कापरिहाराय अकथितं च इति सूत्रप्रवृत्तौ धातवः परिगण्यन्ते -

> दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
> कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्।। इति।

उक्तं हि भट्टोजिदीक्षितेन – "दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेव अकथितं कर्म इति परिगणनं कर्तव्यमित्यर्थ"[४] इति। दुह प्रपूरणे[५], टुयाचृ याच्ञायाम्[६], डुपचष् पाके[७], दण्ड दण्डनिपाते[८], रुधिर् आवरणे[९], प्रच्छ ज्ञीप्सायाम्[१०], चिञ् चयने[११], ब्रूञ् व्यक्तायां वाचि[१२], शासु अनुशिष्टौ[१३], जि जये[१४], मथ विलोडने[१५], मुष स्तेये[१६], णीञ् प्रापणे[१७], हृ हरणे[१८], कृष विलेखने[१९], वह प्रापणे[२०] इत्येते षोडश धातवः परिगणिताः। एतेषां परिगणनान्तर्गतानां तदर्थकानां च धातूनां प्रयोगे एव प्रकृतसूत्रप्रवृत्त्या श्रुधातोः तदन्तर्गतत्वाभावात् नटस्य शृणोति इत्यत्र अकथितं च इति सूत्रेण कर्मसंज्ञाप्रसङ्गो नेति शङ्का परिहृता। "कर्मयुक्स्यादकथितम्" इत्यंशस्य तात्पर्यं हि प्रधानकर्मयुज एव कारकस्य प्रकृतसूत्रेण कर्मसंज्ञा इति। न च नटस्य शृणोतीत्यत्र नटस्य गाथारूपकर्मयुक्त्वाभावात् प्रकृतसूत्रस्याप्रवृत्त्या धातूनां परिगणनं निष्प्रयोजनमिति वाच्यं, कर्मयुगित्याद्यंशस्यापि परिगणनलभ्यत्वात्। प्रकृतकारिकासहकृतसूत्रस्य निष्कृष्टार्थस्तावत् दुदादि-षोडशधातुवाच्यव्यापारजन्यफलाश्रयप्रधानकर्मसम्बन्ध-अकथितकारकस्य कर्मसंज्ञा भवतीति।

**कर्मयुक्त्वविचारः**

धातूनां परिगणनाय भाष्यप्रतिपाद्याशयपरा प्रागुक्ता कारिका भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्यां लिखिता। भाष्यस्था कारिका तु -

> दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
> ब्रुविशासिगुणे यत्सचते तदकीर्तितमाचरितं कविना।।[२१] इति।

अत्र उपयोगनिमित्तम् इत्यस्यैव विवरणपरः कर्मयुक्स्याद् इति भट्टोजिदीक्षितोक्तो ग्रन्थः। तथाहि उपयुज्यते असाविति व्युत्पत्यनुसारं कर्मघञन्त उपयोगशब्दः कर्तुरीप्सिततमं कर्म इति सूत्रविहितमुख्यकर्मपरो वर्तते। निमित्तमित्यस्य युक्तत्वमित्यर्थः। इत्थम् उपयोगनिमित्तमित्यस्य प्रधानकर्मसम्बद्ध इत्यर्थो लभ्यते। स च सम्बन्धो धात्वर्थव्यापारात् प्राग् धात्वर्थव्यापारानन्तरं वेति शङ्कायामुच्यते दुह्यादि-चिपर्यन्तानां धातूनां प्रयोगे धात्वर्थव्यापारात् प्राक् प्रधानकर्मयुजः कारकस्य प्रकृतसूत्रेण कर्मसंज्ञा भवति। ब्रुशास्धात्वोर्योगे तु धात्वर्थव्यापारानन्तरं प्रधानकर्मयुजः कारकस्य प्रकृतसूत्रेण कर्मसंज्ञा भवतीति।

गां दोग्धि पयः इत्यत्र दुह्धात्वर्थविभागानुकूलव्यापारात् प्राग् गवि पयोरूपमुख्यकर्मसम्बन्धसत्त्वात् गोः प्रकृतसूत्रेण कर्मसंज्ञा भवति। माणवकं धर्मं ब्रूते इत्यत्र तु ब्रूधात्वर्थकथनरूपव्यापारात् परं माणवकस्य

धर्मरूपमुख्यकर्मसम्बन्धोत्पत्तेः माणवकस्यापि प्रकृतसूत्रेण कर्मसंज्ञा भवति। अत्र धात्वर्थव्यापारात् प्राक् कर्मसम्बन्धासम्भवात् तदनन्तरं कर्मसम्बन्धत्वं गृह्यते। कर्तुरीतिसूत्रविहितकर्मसम्बद्धत्वं कर्मयुक्त्वम् इत्यङ्गीकारे तु गां दोग्धि पयः स्थाल्याम् इत्यादौ धात्वर्थव्यापारानन्तरं पयोरूपमुख्यकर्मणा सह स्थाल्याः सम्बन्धसत्त्वात् स्थाल्या अपि अधिकरणत्वस्याविवक्षायां प्रकृतसूत्रेण कर्मसंज्ञापत्तिः। परन्तु दुहादिधातुविषये धात्वर्थव्यापारात्प्राक् कर्मसम्बन्धस्यावश्यकत्वेन प्रकृते तथात्वाभावात् नात्र स्थाल्याः कर्मसंज्ञापत्तिः। एवम् अपादानादिविशेषैः इत्यत्र आदिशब्देन अपादानसम्प्रदाननाधिकरणान्येव गृह्यन्ते। करणस्य तु नात्र ग्रहणम्, करणस्य विवक्षितकर्मयुक्त्वासम्भवात्। एवं निष्कर्षस्तावत् प्राप्तिपूर्वकाविवक्षास्थले अपादनसम्प्रदानाधिकरणानां कारकाणामेव तत्तत्त्वेन अविवक्षायां प्रकृतसूत्रेण कर्मसंज्ञा भवतीति।

**गौणमुख्यकर्मविचारः**

दुहादिधातूनां एकव्यापारवाचकत्वपक्षे कर्तुरिति सूत्रविहितकर्मणः प्रधानत्वम्, अकथितं च इति सूत्रविहिकर्मणश्च गौणत्वम्। अतो गां दोग्धि पयः इत्यस्मिन्प्रयोगे पयसो मुख्यकर्मत्वम्, गोश्च गौणकर्मत्वम्। तत्र कर्मणि प्रयोगे कस्मिन् कर्मणि लकार इति जिज्ञासाम् उच्यते -

> गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
> बुद्धिभक्ष्यार्थयोः शब्दकर्मणाञ्च निजेच्छया॥
> प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥ इति।

कर्मणि प्रयोगे दुहादीनां द्वादशधातूनां गौणे कर्मणि लकारो विधीयते। नीहृकृष्वहां चेति चतुर्णां धातूनां प्रधाने कर्मणि लकारो भवति। अतो दुहादीनां योगे गौणे कर्मणि लकारविधानात्, गौणकर्मणोऽभिहितत्वात् तत्रैव प्रथमा, प्रधानकर्मणश्च अनभिहितत्वात् कर्मणि द्वितीया इति द्वितीयाविभक्तिः। अत एव गां दोग्धि पयः इत्यस्य कर्मणि प्रयोगे गौः पयो दुह्यते इत्येवं गोशब्दात् प्रथमा। नीप्रभृतीनां चतुर्णां धातूनां योगे तु प्रधानकर्मणि लकारविधानात् प्रधानकर्मणोऽभिहितत्वात् तत्रैव प्रथमा, गौणकर्मणोऽनभिहितत्वात् कर्मणि द्वितीया इति द्वितीयाविभक्तिर्जायते। अतः ग्राममजां नयति इत्यस्य कर्मणि प्रयोगे ग्रामम् अजा नीयते इत्येवं अजाशब्दात् प्रथमा, तस्य मुख्यकर्मत्वात्।

दुहादिषोडशधातूनां व्यापारद्वयार्थकत्वमङ्गीकृत्य अकथितं च इति सूत्रं प्रत्याख्यातं भाष्यकारेण। तथाहि गां दोग्धि पयः इत्यत्र गौः पयः त्यजति, गवा पयः त्याजयति इत्यर्थप्रतीत्या दुह्-धातोः अन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थकत्वात् गोपनिष्ठ-प्रधानव्यापारजन्य-विभागानुकूलव्यापाररूपफलाश्रयत्वेन गोः, अप्रधानव्यापारजन्यविभागरूपफलाश्रयत्वेन पयसश्च कर्तुरीप्सिततमं कर्म इत्यनेनैव कर्मत्वसिद्धिरिति तेषामाशयः। तस्मिन् व्यापारद्वयार्थकत्वपक्षे गवादीनां प्रधानकर्मत्वम्। प्रधानकर्मत्वस्य स्वरूपमुक्तं नागेशेन – ''प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणकफलाश्रयत्वम्'' इति। अत्र गोपनिष्ठदुह्-धात्वर्थप्रधानीभूतव्यापारे विभागानुकूलव्यापाररूपफलस्य साक्षाद् अन्वयो भवति। तच्च फलं गोनिष्ठम्। अत एव गौः प्रधानकर्म। पयसस्तु तु गौणकर्मत्वम् अप्रधानव्यापारविशेषणकफलाश्रयत्वात्। अस्मिन् पक्षे तु दुहादीनां प्रयोगे प्रधानकर्मणि लकारा विधीयन्ते। अतोऽत्रापि कर्मणि प्रत्यये प्रधानकर्मणोऽभिहितत्वात् गोशब्दात् प्रथमायां गौः पयो दुह्यते इति प्रयोग उपपद्यते।

एवमेव गर्गान् शतं दण्डयति इति वाक्ये दण्डयतेः स्वसम्प्रदानक-दानानुकूलव्यापारानुकूलव्यापारवाचकत्वात् तादृशप्रधानव्यापारप्रयोज्यफलाश्रयत्वाद् गर्गाणां प्रधानकर्मत्वं, अप्रधानव्यापारजन्यफलाश्रयत्वाच्च शतस्य गौणकर्मत्वम्। अतः प्रधानकर्मणि लकारविधानात् गर्गाः शतं दण्ड्यन्ताम् इति प्रयोगः। परन्तु एवं सति वृद्धिसूत्रभाष्यं विरुध्यते। तत्र भाष्ये गर्गाः शतं दण्ड्यन्ताम् इत्यस्य गर्गसमुदायो मिलित्वा दण्डरूपेण शतं ददाति, न तु प्रत्येकं गर्गः शतं ददातीति तात्पर्यं प्रतिपादितम्। उक्तं हि तत्र – अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति इति। तत्र अप्रधानकर्मगर्गाणां बहुत्वेऽपि प्रधानकर्मणः शतस्य आवृत्तिर्नेति प्रतिपादितम्। परन्तु दण्डयतेः व्यापारद्वयवाचकत्वे गर्गाणां प्रधानकर्मत्वात् तद्भाष्यविरोधः सुस्पष्टः। तत्र समाधानम् उच्यते यत् प्राधान्यं द्विविधं भवति – आर्थप्राधान्यं शाब्दप्राधान्यं च। पुत्रेण सहागतः पिता इति वाक्ये आगमनक्रियायां पितुः अन्वयात् पितुः प्राधान्यम् अस्ति। तच्च शाब्दं प्राधान्यम्। पुत्रस्य अप्राधान्यम्। परन्तु पुत्रं विना पिता आगमने असमर्थः। अतः पुत्रस्य आर्थिकं प्राधान्यं वर्तते। एवं प्रकृते गर्गकर्मनिष्ठं शाब्दं प्राधान्यम्। उद्देश्यत्वरूपम् आर्थप्राधान्यं शतकर्मनिष्ठम्। अतः उद्देश्यत्वरूपार्थिकप्राधान्यपक्षे भाष्योक्तिः सङ्गच्छते। एवमत्र शाब्दं प्राधान्यं लाद्युत्पत्तिप्रयोजकम्। आर्थं प्राधान्यं आवृत्तिप्रतिबन्धकमिति बोध्यम्।

मत्त्वः त्वं शकारं चोदयसि इति वाक्ये मत्तः इत्यस्य आपादानत्वेन अविवक्षायाम् अकथितं च इति सूत्रेण कर्मसंज्ञायां मां त्वं शकारं चोदयसि इति वाक्यं समापन्नम्। जिज्ञासाज्ञापनं ण्यन्तस्य चोदयतेरर्थः। व्यापारद्वयार्थकत्वपक्षे ज्ञानानुकूलव्यापारानुकूलव्यापारः अर्थः चोदयतेः। एकव्यापारार्थत्वपक्षे तु शकारं भवति प्रधानकर्म, परन्तु शाब्दं प्राधान्यं युष्मदर्थनिष्ठम्। अतः कर्मणि प्रत्यये प्रधानकर्मणः उक्तत्वात् शकारमसि चोदितः इति प्रयोग उपपद्यते। चोदितः इत्यत्र कर्मणि क्तः।

एकव्यापारार्थकत्वे गवादीनाम अकथितं च इति सूत्रेण कर्मसंज्ञा भवति। एवञ्च आदिकर्मभिन्नत्वात् अप्राधान्यदेव अर्थात् गौणे कर्मणि लकारव्यवस्था क्रियते। व्यापारद्वयार्थत्वे तु प्रधानकर्मणि लकारव्यवस्था। अत उक्तम् –

> प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
> अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥ इति।

गां दोग्धि पयः इत्यादौ गवादेः यदा अपादानत्वेन विवक्षा तदा पञ्चम्येव। यथा गोः पयो दोग्धि। यदा कर्मत्वेन विवक्षा तदा द्वितीयैव। यथा गां पयो दोग्धि इति। यदा क्षीरान्वयिसम्बन्धप्रतियोगित्वेन विवक्षा तदा षष्ठ्येव। द्विकर्मसु गवादीनां कर्मत्वाविवक्षया क्रियान्वये षष्ठी न भवति अनभिधानात्। अर्थात् सर्वत्र षष्ठ्यन्तार्थस्य क्रियान्वयविवक्षायां षष्ठ्यभावः इति तु नियमो नास्ति। क्वचिदेव इति इति मनसि निधाय नागेशः समाधत्ते यत् स्वान्वययोग्यानामर्थे अन्वये सम्भवति षष्ठ्यर्थस्य क्रियान्वयः अव्युत्पन्नः इति वचनानुसारेण क्रियायां सम्बन्धत्वेन अन्वयविवक्षायां षष्ठी न भवति। तेन मातुः स्मरति इत्यादौ षष्ठीप्रयोगे न दोषः।

षष्ठ्यन्तपदोपस्थाप्यस्य क्रियया द्रव्येण च उभयत्र अन्वयसम्भावनायां द्रव्ये एव अन्वयो भवति, न तु क्रियायाम्। षष्ठ्यन्तपदोपस्थाप्यार्थस्य स्वसमभिव्याहृतस्वान्वययोग्यद्रव्ये अन्वयो भवति। अतः तण्डुलानोदनं पचति इत्यत्र तण्डुलान् इति षष्ठ्यन्तपदोपस्थाप्यार्थः विक्लित्याश्रये ओदने अन्वेति, न तु पाकक्रियायाम्।

अत एव कर्तुरीप्सिततमं कर्म इति सूत्रे भाष्ये द्व्यर्थश्चैव पचिः विकारयोगे षष्ठी इत्युक्तम्। अर्थात् विक्लित्तिः विक्लित्यनुकूलव्यापारश्च पच्धात्वर्थः। तण्डुलानोदनं पचति इत्यत्र विक्लित्याश्रये अन्वयात् षष्ठी भवति इति शम्।

**संकेतपञ्जिः**

पा. सू. = पाणिनीयसूत्रम्

धा. पा. = धातुपाठः

वै. सि. कौ. = वैयाकरणसिद्धान्तकौमुदी

**उल्लेखपञ्जिः**

१. कर्मसंज्ञाविधायकानि सूत्राणि - क्रुधद्रुहोरुपसृष्टयोः कर्म(अष्टा.१/४/३८), दिवः कर्म च(अष्टा.१/४/४३), अधिशीङ्स्थासां कर्म(अष्टा.१/४/४६), अभिनिविशश्च(अष्टा.१/४/४७), उपान्वध्याङ्वसः(अष्टा.१/४/४८), कर्तुरीप्सिततमं कर्म(अष्टा. १/४/४९), तथायुक्तं चानीप्सितम्(अष्टा.१/४/५०), अकथितं च (अष्टा.१/४/५१), गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ (अष्टा.१/४/५२), हृक्रोरन्यतरस्याम् (अष्टा.१/४/५३)

२. पा. सू. १/४/५१

३. धा.पा. १०/०३८९

४. वै.सि.कौ. – ५३९

५. धा.पा. २/४

६. धा.पा. १/१००१

७. धा.पा. १/११५१

८. धा.पा. १/४७२

९. धा.पा. ७/१

१०. धा.पा. ६/१४९

११. धापा. ५/५

१२. धा.पा. २/३९

१३. धा.पा. २/७०

१४. धा.पा. १/६४२

१५. धा.पा. १/९८६

१६. धा.पा. ९/६६

१७. धा.पा. १/१०४९

१८. धा.पा. १/१०४६

१९. धा.पा. १/११४५

२०. धा.पा. १/११५९

२१. महाभाष्यम् – १/४/५१

**परिशीलितग्रन्थपञ्जिः**

नागेशभट्टः। *लघुशब्देन्दुशेखरः*। सम्पा. प्रो.हरेकृष्णशतपथी। राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः, २००७।

भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी*(प्रथमो भागः)। सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। वाराणसी: मोतीलाल बनारसी दासः, २०१४ (पुनर्मुद्रणम्)।

वामन-जयादित्यः। *काशिका*। सम्पा. जयशङ्करलाल त्रिपाठी। वाराणसी तारा वुक् एजेन्सी, १९९०।

पाणिनिः। *अष्टाध्यायी*। सम्पा. गोपालदत्तपाण्डेयः। वाराणसी: चौखम्बा सुरभारती प्रकाशन, २०१७। (चौखम्बा सुरभारती ग्रन्थमाला १९)।

भट्टोजिदीक्षितः। *प्रोढमनोरमा* (अव्ययीभावान्तो भागः)। लघुशब्दरत्न-भैरवी-भावप्रकाश-सरला-टीकाभिः संवलिता। वाराणसी: चौखम्बा संस्कृत संस्थान, २००३।

पतञ्जलिः। *व्याकरणमहाभाष्यम्*। सम्पा. श्रीभार्गवशास्त्री जोशी। दिल्ली: चौखम्बा संस्कृत प्रतिष्ठान, १९९१।

भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी*। सम्पा. श्रीगोविन्दाचार्यः। वाराणसी: चौखम्बा सुरभारती प्रकाशन, २०१७।

# न्यायनये ईश्वरः प्रामाणिकः

शिवशंकर-नाइया

**सारसंक्षेपः**

ईश्वरोऽस्ति न वेति जिज्ञासायां *प्रमाणाधीना प्रमेयसिद्धिः* इति न्यायमनुसृत्य चार्वाकादिमतमपाकृत्य उदयनाचार्यादिभिः नैयायिकैः ईश्वरस्यानुमानवेद्यत्वं यत्साधितं तस्य चर्चा अत्र उपस्थाप्यते। उत्पद्यमानस्य घटस्य कर्ता भवति कुलालः, पटस्य कर्ता भवति कुविन्दः। एवम् उत्पद्यमानानां पर्वतसागरादीनां कश्चित् कर्ता भवेत्। स च कर्ता अस्मदादिः अल्पज्ञो जीवः भवितुं न समर्थः। अतः अस्मद्व्यतिरिक्तः पर्वतादीनां कर्तास्तीति सिद्ध्यति, स एव ईश्वरः। मूलत उदयनाचार्यस्य न्यायकुसुमाञ्जलिग्रन्थं विश्वनाथन्यायपञ्चाननस्य भाषापरिच्छेदग्रन्थञ्चाश्रित्य ईश्वरः प्रामाणिक इति आलोचयिष्यते।

**कुञ्चिकाशब्दः**

प्राचीनन्यायः, नव्यन्यायः, पूर्वपक्षः, उत्तरपक्षः, ईश्वरः।

ईश्-धातोः वरच्प्रत्ययात् ईश्वरशब्दः निष्पन्नः। यस्यार्थास्तावत् सर्वशक्तिसम्पन्न-समर्थ-धनाढ्य-प्रभु-स्वामी-परमेश्वर-शिव-कामदेव-दुर्गापति-नायक-नेता-अधिपत्यादयः। यथोक्तं महाभारते –

> अहं चैव हि यच्चान्यन्ममास्ति वसु किञ्चन।
> तत्सर्व्वं तव विस्रब्धं कुरु प्रणयमीश्वरः।।[१]

*ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये*[२] इति मनुः। *विशुद्धसत्त्वप्रधानाज्ञानोपहितचैतन्यम्* इति वेदान्तः। येन जगच्छासितं, स ईश्वरः। सैव जगतः कर्ता धर्ता हर्ता नियन्ता चेति उच्यते। तदुक्तं श्रुत्याम् –

> ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
> तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्वित् धनम्।।[३]

एवञ्च *सर्वे चांशगताः प्रोक्तः कृष्णस्तु भगवान् स्वयम्* इति श्रीमद्भागवतोक्तिरेव प्रमाणम्। कारणं विना कार्यसिद्धिर्न भवतीति नैयायिकैः जगतः निमित्तकारणेत्वेन ईश्वरः स्वीकृतः। स च ईश्वरः जगतो समवाय्यसमवायिनिमित्तकारणत्रयेषु निमित्तकारणं भवतीति मुक्तावलीकारैः विश्वनाथन्यायपञ्चाननभट्टाचार्यैः कारिकावल्यां मङ्गलाचरणे उल्लिखितम्

> नूतनजलधररुचये गोपवधूटीदुकूलचौराय।
> तस्मै कृष्णाय नमः संसारमहीरुहस्य वीजाय।।[४]

संसार एव महीरुहो वृक्षस्तस्य वीजं निमित्तकारणमीश्वरो भवति। न्यायनये पृथिव्यादिषु नवद्रव्येषु आत्मा जीवात्मा-परमात्माभेदाभ्यां द्विविधो भवति। समवायेन ज्ञानवान् जीवात्मा भवति। समवायेन नित्यज्ञानवान् ईश्वरो भवति। तत्र ईश्वरे संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-बुद्धि-इच्छा-प्रयत्नाश्चेति अष्टौ गुणाः वर्तन्ते। एतेषु अष्टगुणेषु बुद्धीच्छाप्रयत्नाः विशेषगुणाः, अन्ये संख्यादयः पञ्च सामान्यगुणाः भवन्तीति नैयायिकानां सिद्धान्तः। तत्र ईश्वरोऽस्तीति न वेति जिज्ञासायामीश्वरो नास्तीति अनीश्वरवादिनां चार्वाक-मीमांसा-बौद्ध-जैन-सांख्यानां मतखण्डनपुरस्सरं ईश्वरसद्भावे न्यायाभिमतं यत्प्रमाणं विद्यते तस्य प्रकाशनमत्र करिष्यते।

ईश्वरः जगतः निमित्तकारणमिति यो हि न्यायसिद्धान्तः विद्यते तन्मनसि निधाय कारिकावल्यां मङ्गलाचरणरूपेण उपस्थाप्यते विश्वनाथपञ्चाननेन *नूतनजलधररुचये* इत्यादि। मेघो यथा वृष्टिप्रदानेन जनसमूहस्य मोदं हर्षम् आनन्दं जनयति तथैव भगवान् कृष्णोऽपि निजभक्ताभिलाषपूर्तये स्वभक्तानां हर्षं जनयतीति श्लोकस्याशयः। तत्र यद्यपि *हेतुर्नाकारणं बीजम्* इति कोषाद् बीजशब्दस्य सामान्यकारणवाचकत्वं तथापि न्यायतन्त्रे समवाय्यसमवायिनिमित्तकारणत्रैविध्याद् भगवतः कृष्णस्य समवाय्यसमवायिकारणत्वासम्भवतया निमित्तकारणत्ववाचकम्। तत्रेदमपि बोध्यम् ईश्वरस्य यद्यपि द्रव्यत्वात् द्रव्यस्य समवायिकारणत्वनियमाच्च संसारात्मकवृक्षस्य ईश्वरः समवायिकारणं स्यात्तथापि नात्र तस्य ईश्वरस्य समवायिकारणत्वं, यतः ईश्वरस्य नित्यत्वेन संसारस्य तथात्वात् प्रलयोच्छेदः प्रसज्यते। नापि ईश्वर असमवायिकारणं यतः असमवायिकारणत्वं गुणकर्मणोरेव भवति। ईश्वरस्य द्रव्यत्वान्नासमवायिकारणत्वमिति तस्मान्निमित्तकारणमीश्वरो भवतीति।

न्यायनये ज्ञानाश्रयः आत्मा, ज्ञानाधिकरणमात्मा। परमात्माजीवात्माभेदात् स द्विविधः। परमात्मनः नामान्तरं ईश्वरः। परमात्मा एकः व्यापकश्च। ज्ञानमिच्छाप्रयत्नाः परमात्मनः विशेषगुणाः, ते च नित्याः तथा सर्वविषयकाः। सिद्धान्तमुक्तावल्यामुक्तम् - *ईश्वरोऽपि न ज्ञानसुखात्मा, किन्तु ज्ञानाद्याश्रयः*[५] इति। वेदान्तिनर्प्राहुः - ईश्वरः सत्यज्ञानानन्दस्वरूप इत्युक्तेऽपि स न ज्ञानस्वरूप आनन्दस्वरूपो वा। यः सर्वज्ञः सर्वविदिति श्रुतिवशात् ईश्वरः ज्ञानाश्रय इत्युच्यते। ईश्वरेण जीवानां शुभाशुभकर्मानुसारं जगत् विरच्यते। सृष्टेः प्रारम्भे जीवहिताय वेदनिर्माणं कृतम्। ब्राह्मणक्षत्रियवैश्यशुद्रवर्णानां तथा ब्रह्मचर्यगार्हस्थवानप्रस्थसंन्यासानां चतुराश्रमाणां व्यवस्था लोकव्यवहाराय तथा शिक्षाप्रदानाय निर्मिता। जगतः स्रष्टावशादीश्वरैव ब्रह्मा इत्युच्यते, पालकत्वात् विष्णुः तथा संहर्तावशात् रुद्रः नाम व्यवह्रियते इति शास्त्रादनुमीयते।

*न्यायकुसुमाञ्जलिः* इति ग्रन्थे कृतमुदयनाचार्येणेश्वरनिरूपणम्। तेनोक्तम् –

> स्वर्गापवर्गयोर्मामनन्ति मनीषिणः।
> यदुपास्तिमसावत्र परमात्मा निरूप्यते।।[६]

ईश्वरविषये संक्षेपतः पञ्चतयी विप्रतिपत्तिर्दृश्यते – *अलौकिकस्य परलोकसाधनस्याभावात्, अन्यथापि परलोकसाधनानुष्ठानसम्भवात्, तदभावावेदक प्रमाणसद्भावात्, सत्त्वेऽपि तस्याप्रमाणत्वात्, तत्साधक प्रमाणाभावाच्चेति*[७]। विरुद्धा प्रतिपत्तिर्यस्मादिति व्युत्पत्त्या विप्रतिपत्तिशब्दः निष्पन्नः। शब्दस्यार्थः विरुद्धकोटिद्वयोः उपस्थापकं वाक्यद्वयम्। संशयस्यान्यतममिह कारणम्। यथा शब्दो नित्यो न वेति (शब्दो नित्यः, शब्दो न नित्यः) वाक्यशब्दविषये नित्यताऽनित्यतारूपस्य विपरीतकोटिद्वयस्योपस्थापकत्वादिदं विप्रतिपत्तिवाक्यम्।

जगदीशतर्कालंकारस्य गुरुणा न्यायकुसुमाञ्जलिकारिकाकारेण रामभद्रसार्वभौमेनोल्लिखितम् – विप्रतिपत्तिवाक्यमिदं यथाक्रमं चार्वाकमीमांसाबौद्धदिगम्वरजैनसांख्यानुसारिनम्। प्रकाशकारवर्धमानोपाध्यायादिप्राचीनटीकाकारैस्तु तन्नोक्तम्। विप्रतिपत्तिवाक्यविषये बहु व्याख्यानमस्ति, तन्मध्ये टीकाकारेण गुणानन्दविद्यावागीशेनोक्तं मतमत्रोच्यते। विप्रतिपत्तिः विपरीता प्रकृतसिद्धिबाधिका असाधकत्वविषयिका प्रतिपत्तिः। तस्यां पञ्चतय्यां विरोधिप्रतिपत्तौ हेतूनाह – *अलौकिकस्येत्यादि*।

१. अलौकिकपरलोकसाधनम् अदृष्टं चेतनाधिष्टितम् अचेतनत्वे सति जनकत्वादितीश्वरसाधकानुमानप्रदर्शनानन्तरमीश्वरवादिनम्प्रति निरीश्वरवादिभिरुक्तं यदयं हेतुः असाधकः

आश्रयासिद्धेः इति विरुद्धप्रतिपत्तिः। यस्मादलौकिकं परलोकं वा, साधनम् अलौकिकपरलोकसाधनं वेति किमपि न स्वीकार्यम्। तस्मात् स्थलेऽत्र आश्रयासिद्धिर्दोषो भवति।

२. वेदः वक्तृवाक्यार्थयथार्थज्ञानजन्यः प्रमाणशब्दत्वादित्यनुमानेनेश्वरसाधने प्रवृत्ते सति तस्य बाधकम् अन्यथापि परलोकसाधनानुष्टानसम्भवादिति। अर्थात् वेदवाक्यार्थज्ञानजन्यत्वं विहाय अपि नित्यनिर्दोषत्वात् वेदस्य प्रामाण्यं तन्मूलकयागाद्यनुष्ठानञ्च सम्भवम्। अत एव तदनुमानमप्रयोजकमनुकूलतर्करहितम्।

३. कस्यचिदीश्वरसाधकानुमानस्य या बाधकप्रतिपत्तिः, तस्य हेतुः - *तदभावावेदकप्रमाणसद्भावादिति।* अर्थात् बाधकसामग्रीरूपेणानुपलब्धिरेव विरुद्धप्रतिपत्तिहेतुः।

४. मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति सूत्रे वेदप्रामाण्यं प्रति आप्तप्रामाण्यं कारणमित्युक्तम्। इत्थमीश्वरसिद्धिर्या बाधकप्रतिपत्तिः तस्य हेतुः - *सत्त्वेऽपि तस्याप्रमाणत्वादिति।* अर्थात् ईश्वरः तस्य च ज्ञानप्रामाण्यं नास्ति। अत एव तदनुमाने हेत्वसिद्धिदोषः।

५. क्षितिः सकर्तृका इत्यनुमानस्य बाधकप्रतिपत्तेः हेतुः – *तत्साधकप्रमाणाभावादिति।* क्षितिर्न सकर्तृका सकर्तृकत्वसाधकप्रमाणाविषयत्वादिति पूर्वोक्ते ईश्वरसाधकानुमाने बाधोत्थापकरूपेण विप्रतिपत्तिहेतुरिति।

ईश्वरसाधकप्रमाणाभावादिति पञ्चमीं विप्रतिपत्तिं निराकर्तुमुपन्यस्यति – नन्वीश्वरे प्रमाणोपपत्तौ सत्यां सर्वमेतदेव स्यात्, तदेव तु न पश्याम इति चेत्, न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति। अवैदिकैः चार्वाकादिभिः ईश्वरो नास्तीति यत् प्रतिपादितं तन्मतापकरणाय प्रमाणप्रदर्शनाय च मुक्तावलीकारेणोक्तम् – एतेन ईश्वरे प्रमाणमपि दर्शितं भवतीति। अर्थात् संसारकरणत्वकथने ईश्वरेऽनुमानरूपं प्रमाणं प्रदर्शितं भवति। तत्र प्रमाणविषये उदयनाचार्येण न्यायकुसुमाञ्जलिग्रन्थस्य पञ्चमस्तवकेऽभिहितम् -

> कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।
> वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः।।[८]

उदयनाचार्यप्रतिपादितनवविधानुमानेषु प्रथमकार्यत्वहेतुकानुमानं स्वीकृत्य विश्वनाथेनोक्तम् – तथाहि यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। अनुमानाकारस्तु – क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवदिति। अत्र घटादि कार्यमिति पदद्वये कार्यपदं हेतुबोधकम्। यथा घटादिकं कार्यत्वाद् भवति कर्तृजन्यं तथा सति तादृशानुमानं फलितं भवति। उपर्युक्तानुमाने क्षित्यङ्कुरादिकं पक्षो, क्षितिपदेन स्थूलपृथिव्याः ग्रहणं अङ्कुरपदेन द्व्यणुकस्य आदिपदेन च तद्धटिमेघादीनां ग्रहणं भवति। एवञ्चात्र क्षितित्वमङ्कुरत्वं तद्धटत्वं मेघत्वञ्च न पक्षतावच्छेदकमपि तु तत्त्रयसाधारणं स्वरूपसम्बन्धात्मकं कार्यत्वं पक्षतावच्छेदकम्, तदवच्छिन्नः पक्षः क्षित्यङ्कुरादिकम्। प्रागभावप्रतियोगित्वात्मकं कार्यत्वं च उपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपं ज्ञेयम्। अत्र उपादानेन समवायिकारणं ग्राह्यम्। तथाहि घटे उपादानं कपालद्वयं, तद्गोचराऽपरोक्षं तद्विषयकप्रत्यक्षं यत् ज्ञानचिकीर्षाकृत्येत्त्रयं तद्वान् कुलाल एव, स च घटस्य कर्ता यथा भवति तथैव क्षित्यङ्कुरादीनामुपादानकारणं परमाण्वादयः, तद्गोचराऽपरोक्षज्ञानचिकीर्षाकृतिमानीश्वर एव भवितुमर्हतीति ईश्वरः सिद्धो भवति। बाधकप्रमाणाभावे सत्यपि साधकप्रमाणाभावत्वात् यथा शशशृङ्गादेरलीकत्वमभिप्रेतं तार्किकैः, तथा ईश्वरस्यापि साधकप्रमाणाभावे अभावत्वं सिद्ध्यति। पूर्वपक्षिमतं खण्डनाय ईश्वरस्यास्तित्वसाधकप्रमाणोपस्थापनाय च कारिकेयमुल्लिखिता उदयनाचार्येण।

केचित्तु अनुकूलकृतिसमवायित्वमेव कर्तृत्वं, न तु जनकत्वविशेषितं गौरवात्, तथा च ज्ञानेच्छाकृतिजन्यत्वस्यैव साधकत्वात् तदाश्रयत्वमेवेश्वरस्य कर्तृत्वमित्याहुः।

नन्वीश्वरे प्रमाणोपपत्तौ सत्यां सर्वमेतदेव स्यात्, तदेव तु न पश्याम इति चेत्, न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति। तथा हि कार्यत्वादिहेतुभिरेव ईश्वरास्तित्वं प्रमाणितमिति। प्राचीननैयायिकसम्मतमीश्वरसाधकानुमानम् – क्षित्यङ्कुरादिकं कर्तृजन्यं (सकर्तृकम्) कार्यत्वात् घटवदिति। अर्थात् घटादिकार्यं यथा कर्तृजन्यम्, तथा क्षित्यङ्कुरादिकं कार्यमपि कर्तृजन्यम्। न्यायनये द्व्यणुकं भवति प्रथमोत्पन्नं कार्यम्। उक्तानुमाने साध्यं कर्तृजन्यत्वम्, हेतुः कार्यत्वम्, दृष्टान्तश्च घटः। अनुमानेनानेन पक्षे कर्तृजन्यत्वस्य सिद्धे सति कर्तृरूपेण यः सिद्ध्यति सैव ईश्वरः। वेदप्रमाणेनापि ईश्वरः सिद्धो भवति। श्वेताश्वतरोपनिषद्युक्तम् – *द्यावाभूमीजनयन् देव एकः*। ऋग्वेदसंहितायामुक्तम् – *विश्वस्य कर्ता भुवनस्य गोप्ता*। अत एव कार्यत्वहेतुः कानुमानेनेश्वरसिद्धिः न्यायवैशेषिकाचार्यैर्दृष्टा।

ईश्वरसाधकानुमानं द्वितीयहेतुः आयोजनम्। अनुमानाकारो भवति - ‘सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वात् अस्मदादिशरीराक्रियावत्’ इत्यनुमाने सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म पक्षः, चेतनप्रयत्नपूर्वकत्वं साध्यं, कर्मत्वञ्च हेतुः। सृष्टेः प्रारम्भे द्व्यणुकारम्भकपरमाणुद्वयसंयोगरूपकर्म अवश्यमेव किञ्चित् चेतनप्रयत्नपूर्वकम्। कारणं हि प्रयत्नं विना एतादृशः कर्मसम्पन्नर्भवितुं नार्हति, तादृशि कर्मणि कर्मत्वात्। यत्र यत्र हेतुः कर्मत्वं तत्र तत्र साध्यं चेतनपूर्वकत्वम्। इत्थमनुमानेन यस्य प्रयत्नपूर्वकमुक्तसंयोगजनकं कर्म सम्पद्यते, सैव ईश्वरः। यस्मात् सृष्टेः प्रारम्भे ईश्वरं विना कस्यचित् जीवस्यास्तित्वं न सम्भवति। अत एव आयोजनेन कर्मत्वेन वा चेतनरूपेण यः सिद्धः सैव ईश्वरः।

ईश्वरसाधकानुमानं तृतीयहेतुः भवति धृतिः। अत्र धृतिशब्दस्यार्थः धारणम्। अनुमानाकारो भवति – ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियतिविहङ्गमधृतकाष्ठवत्। इत्यनुमाने ब्रह्माण्डादि पक्षः, पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितत्त्वं साध्यम्, धृतिमत्त्वं हेतुः, दृष्टान्तश्च विहङ्गमधृतकाष्ठः। विहगाः यथा नीडनिर्माणाय शुष्ककाष्ठादिं यत्नेन आनयन्ति, तथैव अस्माकं ब्रह्माण्डमिदमवश्यं केनचित् पुरुषेण विधृतम्। धृतिमत्त्वात् पतनप्रतिबन्धकीभूतप्रयत्नवान् पुरुष एव ईश्वरः।

ईश्वरसाधकानुमानं चतुर्थहेतुः भवति पदम्। पदशब्दस्यार्थः व्यवहारः। अनुमानाकारो भवति – पटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। अनुमानेऽस्मिन् पटादिसम्प्रदायव्यवहारः पक्षः, स्वतन्त्रपुरुषप्रयोज्यत्वं साध्यम्, व्यवहारत्वं हेतुः दृष्टान्तश्च आधुनिकलिप्यादिव्यवहारः। आधुनिकलिप्यादिव्यवहारः यथा स्वतन्त्रपुरुषप्रयोज्यः, तथैव पटादिसम्प्रदायव्यवहारोऽपि स्वतन्त्रपुरुषप्रयोज्यः। व्यवहारत्वात् स्वतन्त्रपुरुषरूपेण ईश्वरः सिद्धः।

ईश्वरसाधकानुमानं पञ्चमहेतुः भवति प्रत्ययो प्रामाण्यं वा। अनुमानाकारः – वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् (प्रामाण्यात्) प्रत्यक्षादिप्रमावत्। अनुमानेऽस्मिन् वेदजन्यज्ञानं पक्षः, कारणगुणजन्यत्वं साध्यं, प्रमात्वं हेतुः दृष्टान्तश्च प्रत्यक्षादिप्रमा। प्रामाण्यं कारणगुणजन्यम्। यत्र यत्र प्रमात्वं प्रामाण्यं वा तत्र तत्र कारणगुणजन्यत्वम्। वेदज्ञाने यत् प्रामाण्यं तदवश्यमेव वेदवक्तारूपकारणगुणजन्यम्। अत एव वेदवक्तृरूपेण सर्वज्ञत्वादिविशिष्टः ईश्वरः सिद्धो भवति।

ईश्वरसाधकषष्ठहेतुः श्रुतिः। अनुमानाकारः – वेदः पौरुषेयः वेदत्वात् आयुर्वेदवत्। अत्र वेदः पक्षः, पौरुषेयत्वं साध्यम्, वेदत्वं हेतुः, दृष्टान्तश्च आयुर्वेदः। न्यायनये वेदः पौरुषेयः अर्थात् ईश्वररूपपुरुषरचितः। अत एव उक्तानुमानेन यः साध्यरूपपुरुषः सिद्ध्यति, सैव सर्वज्ञेश्वरः।

सप्तमहेतुः भवति वाक्यत्वम्। वेदः पौरुषेयः वाक्यत्वात् भारतादिवदित्यनुमानाकारोऽत्र। अनुमानेऽस्मिन् वेदः पक्षः, पौरुषेयत्वं साध्यम्, हेतुः वाक्यत्वं दृष्टान्तश्च महाभारतादिः। यत्र यत्र वाक्यत्वं तत्र तत्र पौरुषेयत्वम्। अतः पौरुषेयत्वात् यः पुरुषः सिद्धः सैव ईश्वरः।

ईश्वरसाधका अष्टमहेतुर्भवति संख्याविशेषः। अत्रानुमानाकारः – द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात्। द्व्यणुकपरिमाणं पक्षः, संख्याजन्यत्वं साध्यं, परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वं हेतुः। जन्यपरिमाणं त्रिविधप्रकारेणोत्पद्यते – संख्यायोनिः परिमाणयोनिः प्रचययोनिश्च। योनिशब्दस्यार्थः कारणम्। परिमाणस्य त्रिविधं कारणम् – संख्या परिमाणं प्रचयश्च। परमाणुमात्रं सजातीयोत्कृष्टपरिमाणस्य जनको भवति। महत्परिमाणविशिष्टाभ्यां कपालद्वयाभ्यां निर्मितं घटपरिमाणमुत्कृष्टम्। अणुपरिमाणं तु न कस्यापि कारणं भवति। तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्। तच्च न सम्भवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्। महदारब्धस्य महत्तरत्ववदणुजन्यस्याऽणुतरत्वप्रसङ्गात्। भाषापरिच्छेदे ग्रन्थे विश्वनाथेनोक्तम् – पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्। अतः न्यायवैशेषिकाचार्यैरुक्तम् – परमाणुगतद्वित्वसंख्या द्व्यणुकपरिमाणस्य कारणमिति। द्वित्वादिसंख्या अपेक्षाबुद्धिजन्या, तस्मात् यस्यापेक्षाबुद्धिमाश्रित्य परमाणुद्वित्वसंख्या संयुक्ता भवति, सैव ईश्वरः। इत्थं उदयनाचार्येण ईश्वरसाधकैः अष्टप्रमाणैः ईश्वरास्तित्वं प्रतिपादितम्। वस्तुतः प्रागुक्तसामान्यतोदृष्टानुमानेन परिशेषानुमानेन च सर्वज्ञपुरुषस्यास्तित्त्वं सिद्धम्।

अत एव नैयायिकाभिमतानुमाने अनुकूलतर्कप्रदर्शनाय विश्वनाथेन उच्यते - मम तु कर्तृत्वेन कार्कारभाव एव अनुकूस्तर्कः इति। अर्थात् कार्यत्वावचछिन्नं प्रति कर्तृत्वावच्छिन्नं कारणं भवतीति कार्यकारणभावः। तथा हि कार्यत्वं यदि सकर्तृकव्यभिचारि स्यात् तर्हि कृतिजन्यतावच्छेदकं न स्यादित। एवञ्च आगमप्रमाणेनापि ईश्वरं साधयितुं शक्यते। तथा चोक्तं विश्वनाथेन – *'द्यावाभूमी जनयन्देव एकः '(यजुः १७/१९) 'विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादयः आगमा अप्यनुसन्देयाः* इति। अत्र द्यौः स्वर्गलोकः, भूमिः मर्त्यलोकः, द्यावाभूमीति छान्दसः प्रयोगः, स्वर्गं भूमिं चोत्पादयन् देवः परमात्मा परमेश्वर एक एव। स च परमात्मा विश्वस्य जगतः वा कर्ता निमित्तकारणं ब्रह्माण्डस्य संरक्षणकर्ता भवति। यः सर्वज्ञः सर्वविद् इत्यादिना श्रुतिप्रमाणेनापि ईश्वरः सिद्ध्यतीति।

**उल्लेखपञ्जिः**

१. महाभारतम्, वनपर्वः।

२. *मनुसंहिता*, १.९९।

३. *ईशोपनिषद्*, १।

४. भट्टाचार्य पञ्चानन (सम्पा.), *भाषापरिच्छेदः*, पृ. ४।

५. तदेव पृ. २३८।

६. मिश्र श्यामापद, *न्यायकुसुमाञ्जलिः*, पृ. १७।

७. भट्टाचार्य श्रीमोहन, *न्यायकुसुमाञ्जलिः*, पृ. १७।

८. *न्यायकुसुमाञ्जलिः*, ५.१।

**परिशीलितग्रन्थपञ्जिः**


*ईशोपनिषद्*। सम्पा. अतुलचन्द्रसेनः सीतानाथतत्त्वभूषणश्च, हरफ प्रकाशनी, स्वदेशी प्रिन्टिं ओयार्कस प्राः लिः, २०१५ (पुनर्मुद्रणम्)।

*ईशोपनिषद्*। सम्पा. स्वामी जुष्टानन्दः, कलकाता : उद्बोधन-कार्यालयः, १३९९ वङ्गाब्द (प्रथमसंस्करणम्); १४२४ (पुनर्मुद्रणम्)।

उदयनाचार्यः। *न्यायकुसुमाञ्जलिः*, सम्पा. श्यामापदमिश्रः, कलिकाता : संस्कृत-पुस्तक-भाण्डारः,१३९० वङ्गाब्दः(प्रथमसंस्करणम्)।

गौतमः। *न्यायदर्शनम्* (प्रथमः खण्डः), सम्पा. फणिभूषणतर्कवागीशः, कलिकाता : पश्चिमवङ्गराज्यपुस्तकपर्षद्, १९८१।

फणिभूषणतर्कवागीशः। *न्यायपरिचयः*, कलिकाता : पश्चिमवङ्गराज्यपुस्तकपर्षद्, १९७८ (प्रथमसंस्करणम्), २००६ (तृतीयसंस्करणम्)।

*मनुसंहिता*। सम्पा. मानवेन्दुवन्दोपाध्यायः, कलकाता : संस्कृत-पुस्तक-भाण्डारः, २०१६ (3य संस्करणम्)।

*महाभारतम्*। सम्पा. श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यः, कलकाता : १९३३।

विश्वनाथन्यायपञ्चाननः। *भाषापरिच्छेदः*, सम्पा. श्रीमद्पञ्चाननभट्टातार्यः, कलिकाता : महाबोधि-वुक्-एजेन्सि, १९७० (प्रथमसंस्करणम्); २०१६ (पुनर्मुद्रणम्)।

*श्वेताश्वतरोपनिषद्*। सम्पा. पं. जगन्नाथशास्त्री तैलङ्गः, वाराणसी : शैवभारती-शोधप्रतिष्ठानम्, २००६।

# रससूत्रम् : एकः विमर्शः

सुरेश-घोषः

**सारसंक्षेपः**

प्राचीनभारतीयालङ्कारशास्त्रीयपरम्परायां रसालङ्कार-रीतिध्वनिवक्रोक्त्यौचित्यसम्प्रदायाः समुत्पन्नाः आसन्। एतेषु प्राचीनतमो भवति रससम्प्रदायः। वर्तमाने काले उपलब्धरसशास्त्रेषु प्राचीनतममस्ति भरतप्रणीतं नाट्यशास्त्रम्। भरताचार्येण नाट्यशास्त्रस्य प्रथमाध्याये नाटकोत्पत्तिप्रसङ्गे उक्तम् अथर्ववेदात् रसः संगृहीतः। भरतस्य मतानुसारेण सहृदयः दर्शकः एव रसास्वादं करोति। तन्मते नाट्यरसस्य आश्रयः हि नटः नटी च, न तु नाट्यकारः। अधुना प्रश्नस्तावत् नाट्यरसस्य आश्रयः कः? केनैव प्रकारेण रसस्यास्य निष्पत्तिर्भवति? प्रश्नस्यास्य निरसनार्थं भरताचार्यस्य रससूत्रम् आधारीकृत्य अभिनवभारतीटीकायां समाधानं प्रदत्तम्। रससूत्रस्य व्याख्यानविषये चतुर्णां पण्डितानां मतानि विद्वत्समाजे विशेषतया आलोचितानि। तद्यथा भट्टलोल्लटस्य उत्पत्तिवादः, भट्टशङ्कुकस्य अनुमितिवादः, भट्टनायकस्य भुक्तिवादः, अभिनवगुप्तस्य अभिव्यक्तिवादश्च इति। परन्तु प्रत्येकं व्याख्या भिन्नरूपेण प्रतिपादिता। प्रबन्धेऽस्मिन् एतेषां पण्डितानां सिद्धान्तं स्वस्वमतोपस्थापनपूर्वकं यथामति आलोचितम्।

**कुञ्चिकाशब्दः**

रसः, भट्टलोल्लटः, भट्टनायकः, भट्टशङ्कुकः, अभिनवगुप्तः।

वस्तुतः रसस्तु अखण्डः एव। तैत्तिरीयोपनिषदि रसः ब्रह्मरूपेण उपस्थाप्यते। तदुक्तं- 'रसो वै सः'। आनन्ददायकस्तु रसः। ब्रह्मलाभे यथा आनन्दः अनुभूयते तद्वत् रसस्यास्वादनेऽपि परमानन्दः अनुभूयते। आनन्दस्य उत्सः यथा ब्रह्म तथा साहित्यस्य आनन्दस्य उत्सस्तु रसः एव।

प्राचीनकालादेव रसतत्त्वस्य आलोचना प्रचलिता आसीत्। सा आलोचना अद्यतनकालेऽपि शिष्याचार्यपरम्परया क्रमशः प्रवाहिता। भरतप्रणीतं रसतत्त्वविषयकं नाट्यशास्त्रं तु सर्वेषु प्राप्तग्रन्थेषु प्राचीनतमं प्रामाण्यग्रन्थश्च। यद्यपि भरताचार्यस्य पूर्वं विविधानामालंकारिकाणां नाम प्राप्यते तथापि तेषां कोऽपि ग्रन्थः अस्माकं नयनमार्गं प्रति न आयाति। रसप्रवर्तकेषु प्रथमः भवति भरताचार्यः इति सर्वैरेव आलंकारिकैः स्वीक्रियते । भरताचार्येण नाट्यशास्त्रस्य प्रथमाध्याये नाटकस्योत्पत्तिः आलोचिता। नाटकोत्पत्तिप्रसङ्गे भरताचार्येणोक्तम् अथर्ववेदात् रसः संगृहीतः। तथाह्याम्नातं आचार्येण भरतेन-

> जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।
> यजुर्वेदादभिनयान् रसानाथर्वणादपि ।।[१] इति।

नाट्यरसस्योत्पत्तिः रसास्वादश्च लौकिकरसेन सह तुलितौ आचार्येण भरतेन। यथा विविधानां व्यञ्जनौषधिद्रव्याणां संयोगेण लौकिकरसः निष्पन्नः भवति तथा अलंकारशास्त्रे विविधानां भावानां संयोगेन स्थायिभावः रसे परिणतः भवति। यथा अस्माकं समीपे लौकिकरसः आस्वादयोग्यः तथैव आलंकारिकाणां समीपे काव्यरसः आस्वाद्यरूपेण परिगण्यते। रसोऽयं विविधभावैः अभिनयचतुष्टयेन च व्यञ्जितो भवति चेत्तर्हि सहृदयानां दर्शकानां लोकोत्तरः आनन्दलाभः भवति। तदर्थं रसोऽयं नाट्यरसरूपेण परिचीयते। अधुना प्रश्नस्तावत् भरतस्य समये श्रव्यकाव्यं प्रचलितम्

आसीत् न वा? अथ तेनैव केवलं नाट्यरसस्य कथा उल्लेखिता। यद्यपि भरतस्य नाट्यशास्त्रे श्रव्यकाव्यस्य उल्लेखः वर्तते तथापि चित्तचमत्कृतिजनकस्य उपादानस्य नाटकस्य मध्ये विद्यमानत्वात् तेन नाट्यरसस्य आलोचना विहिता। पाश्चात्यपण्डितस्य आरिस्टटलस्य मतानुसारं 'Epic Poetry' इत्यस्मात् 'Comedy And Tragedy' इत्युत्कृष्टः। परवर्तिनि काले आचार्येण अभिनवगुप्तेन काव्यरसः नाट्यरसस्य मध्ये अन्तर्भुक्तः।

नाट्याभिनयदर्शनसमये सावलीलभावेन सहृदयैः दर्शकैः रसास्वादः परिगृह्यते। नाटकमिदं रसस्य अभिव्यक्तिजनकानाम् उपकरणसमूहानां श्रेष्टाश्रयस्वरूपम् इत्येतत्तु भरताचार्यस्य पूर्ववर्तिनाम् आलंकारिकाणां समीपे परिज्ञातम् आसीत्। तथाहि कथितं नाट्यशास्त्रे –

> यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।
> आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः।।
>
> भावाभिनयसंबद्धान्स्थायिभावास्तथा बुधाः।
> आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः।।[२] इति।

भरतस्य मतानुसारेण सहृदयः दर्शकः एव रसास्वादं करोति। तन्मते नाट्यरसस्य आश्रयः हि नटः नटी च, न तु नाट्यकारः। अधुना प्रश्नस्तावत् नाट्यरसस्य आश्रयः कः? केनैव प्रकारेण रसस्यास्य निष्पत्तिर्भवति? प्रश्नस्यास्य निरसनार्थं भरताचार्यस्य रससूत्रम् आधारीकृत्य टीकाकृतः समाधानं कृतवन्तः। आचार्यस्य भरतस्य रससूत्रं तावत्- 'तत्र विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः'[३] इति। परन्तु विषयेऽस्मिन् परिलक्ष्यते मतानैक्यं टीकाकाराणां मध्ये। तेषां मध्ये चतुर्णां पण्डितानां मतानि विद्वत्समाजे विशेषतया आलोचितानि। तद्यथा भट्टलोल्लटस्य उत्पत्तिवादः, भट्टशङ्कुकस्य अनुमितिवादः, भट्टनायकस्य भुक्तिवादः, अभिनवगुप्तस्य अभिव्यक्तिवादश्च इति।

भरतरससूत्रस्यव्याख्याकरणात् प्राक् सूत्रे उल्लिखितानां पदानां ज्ञानम् आवश्यकम् अस्ति। रससूत्रे विभावानुभावव्यभिचारिभावानामुल्लेखः वर्तते। यम् अवलम्ब्य रसस्य सृष्टिर्भवति सः तु विभावः। तथाह्युक्तं– 'विभावयन्ति इति विभावाः'। आलम्बनोद्दीपनभेदेन द्विविधः विभावः। विषयाश्रयौ द्वौ आलम्बनविभावौ उद्दीपनविभावस्तु उद्बोधक एव-

> तत्र जेया विभावास्तु रत्यास्वादनहेतवः।
> ते द्विधालम्बना एके तथैवोद्दीपनाः परे।।[४] इति।

यत् वस्तु अवलम्ब्य रसमुत्पादयति सः एव आलम्बनविभावः। पारिपार्श्विकी या अवस्था रसोत्पन्नं प्रति अनुकूला भवति सा तु उद्दीपनविभावनाम्ना परिचीयते। प्रकृतपक्षे अनुभावः लौकिकचित्तवृत्तेः कार्यं भूत्वापि अलौकिकस्य रसात्मकचित्तवृत्तेः कारणम्। आङ्गलभाषायाम् 'Expression' इत्ययमेव अनुभावः। स्थायिभावस्य उपभोगसमये तस्य उपादानस्वरूपः यः चञ्चलः भावः चित्तम् अनुरञ्जयति सः तु व्यभिचारिभावः। रससूत्रे विभावानुभावव्यभिचारिभावानाम् उल्लेखं कृत्वापि स्थायिभावो न उल्लेखितः आचार्येण भरतेन। भरतस्य रससूत्रे संयोगः निष्पत्तिश्च इत्यनयोः शब्दयोः कः अर्थः अभिप्रेतः इत्यस्मिन् विषये विदुषां सकाशे विप्रतिपत्तिः वर्तते। परवर्तिनि काले भट्टलोल्लट-भट्टशङ्कुक-भट्टनायकाभिनवगुप्तादिभिः आचार्यैः रससूत्रस्यास्य व्याख्या कृता। परन्तु प्रत्येकं व्याख्या भिन्नरूपेण प्रतिपादिता। आदावेव भट्टलोल्लटस्य मतमालोचितं भवति।

पूर्वमीमांसामाधारीकृत्य भट्टलोल्लटेन रससूत्रं विश्लेषितम्। काव्यप्रकाशसंकेतः इति टीकाग्रन्थे माणिक्यचन्द्रसूरिः भट्टलोल्लटस्य रससमीक्षाविषयकस्य ग्रन्थस्य नाम रसविवरणम् इति उल्लेखं कृतवान्। किन्तु ग्रन्थस्यास्य किमपि अस्तित्वं नास्ति। अभिनवगुप्तेन तस्याम् अभिनवभारतीटीकायां लोल्लटस्य रससमीक्षा उल्लिखिता। लोल्लटेन रसस्य प्रत्यक्षकारणरूपेण विभावः स्वीक्रियते। किन्तु रसस्य प्रकृतः आश्रयः कः? नाट्यकारः सहृदयः अनुकर्ता नटः अथवा दुष्यन्तशकुन्तलाप्रभृतयः नायकनायिकाः वा। भट्टलोल्लटस्य मते अनुकार्यमेव प्रकृतरसस्य आश्रयः। अनुकार्यमेव प्रकृतरसस्य अनुभवं करोति। विभावानुभावव्यभिचारिभावानां परस्परं संयोगेन रसस्य निष्पत्तिर्भवति। लोल्लटाचार्यस्य मतानुसारं निष्पत्तिः इति पदस्य अर्थस्तावत् उत्पत्तिः। अभूत-प्रादुर्भावस्तु उत्पत्तिः। अतः रसनिष्पत्तिशब्दस्य अर्थस्तावद् रसोत्पत्तिः। तदर्थं भट्टलोल्लटः उत्पत्तिवादी इति नाम्ना अभिधीयते।

अधुना प्रश्नोऽयमागच्छति यत् उत्पत्तिं प्रति कारणं किम्? विभावानुभावव्यभिचारभावानां संयोगात् रसस्य उत्पत्तिः भवति इत्येतत्तु भरतस्य रससूत्रस्य सरलार्थः। परन्तु संयोगपदस्य अर्थः कः? तदुत्तरे लोल्लटाचार्येण कथितं हि संयोगः इत्यस्य पदस्य साधारणार्थस्तु सम्बन्धः। पुनः प्रश्नस्तावत् केन सह अस्य सम्बन्धः? भट्टलोल्लटस्य मते तु विभावानुभावव्यभिचारभावैः सह रसात्मकचित्तवृत्तेः सम्बन्धत्रयं भवति। विभावेन सह रसस्य उत्पाद्य-उत्पादकसम्बन्धः, अनुभावेन सह गम्य- गमकसम्बन्धः, व्यभिचारिभावेन सह पोष्य- पोषकभावसम्बन्धः भवति। लोल्लटाचार्यस्य मतानुसारं रसात्मकचित्तवृत्तिस्थायिभावयोर्मध्ये नास्ति स्वरूपगतं वैषम्यम्। अर्थात् परस्परम् अभिन्नरूपेण तिष्ठतः। नायकस्य दुष्यन्तस्य चित्ते शकुन्तलाविषयकस्य रतिभावस्य प्रादुर्भावः भवति। अस्य रतिरूपस्य स्थायिभावस्य आलम्बनविभावस्तु शकुन्तला। शकुन्तला एव रतिरूपस्य स्थायिभावस्य उत्पत्तिं प्रति कारणम्। अत एव स्थायिभावेन रसेन वा विभावस्य उत्पाद्य- उत्पादकसम्बन्धः वर्तते। पुनः प्रश्नस्तावत् दर्शकाः केन प्रकारेण अवगन्तुं शक्यन्ते यत् दुष्यन्तस्य हृदये शृङ्गाररसस्य उत्पत्तिः भवति? तथाहि वक्तुं शक्यते यत् दुष्यन्तस्य बाह्यशरीरचेष्टादिभिः दर्शकाः अवगच्छन्ति। बाह्यशरीरचेष्टासमूहस्तु भ्रूभङ्गीकारेङ्गितचेष्टादयः। शास्त्रस्य परिभाषायाम् अयं बाह्यशरीरचेष्टासमूहः हि अनुभावः। रसस्तु अनुमेयः गम्यः वा। आकार- इङ्गितप्रभृतयः हि अनुमापकः गमकः वा। अत एव रसानुभावयोर्मध्ये गम्य- गमकभावः सम्बन्धः अस्ति। किन्तु केवलं विभावानुभावाभ्यां रसः परिपूर्णः न भवति। शङ्कासूयावितर्कनिर्वेदप्रभृतिभिः व्यभिचारिभावैः रसस्य आस्वादनस्वरूपः परिपूर्णः जायते। अतएव रसव्यभिचारिभावयोर्मध्ये पोष्यपोषकभावः सम्बन्धः भवति।

अधुना प्रश्नोऽयम् आयाति यत् नाट्यस्य अभिनयदर्शनकाले दर्शकाणां चित्ते अनुकार्यस्य दुष्यन्तनायकादेः रसस्य केवलं बोधः जायते वा? भट्टलोल्लटेन तु नटः अनुकार्येण नायकेन सह अभिन्नरूपेण प्रतिपाद्यते। कारणं हि नटैः सह अनुकार्यस्य नायकस्य परिधानानुभावप्रभृतीनां साधर्म्यमस्ति। अत एव दर्शकाः नटे अनुकार्यस्य दुष्यन्तस्य आरोपं कृत्वा रसस्य आस्वादनं कृतवन्तः। अनुकार्यः दुष्यन्तः हि नटः इति ज्ञानमिदम् अलौकिकप्रत्यक्षज्ञानरूपेण परिभासते। अलौकिकप्रत्यक्षज्ञानमिदं आरोपमूलकम्। नटे रसस्य प्रकृतसत्ता नास्ति। नटे अनुकार्यं तु केवलम् आरोपमात्रम्। सहृदयानां चित्ते या आनन्दमयी रसानुभूतिः भवति तत्तु उपचारमात्रम् इत्ययं आचार्यस्य भट्टलोल्लटस्य स्वतन्त्रः सिद्धान्तः।

भट्टलोल्लटस्य अभिप्रायोऽत्र रसः हि अनुकार्यः नायकाश्रितः। किन्तु विपक्षाः प्रतिवादिनः एतत् न स्वीकुर्वन्ति। तेषां विरुद्धवादिनां मते शकुन्तलां प्रति दुष्यन्तस्य या रतिः परिलक्ष्यते तस्याः व्यवहारिकैः जगद्भिः सह किमपि पार्थक्यं नास्ति। दुष्यन्तस्य रतिः नितान्तमेव लौकिकी। परन्तु साहित्ये प्रकृतः रसस्तु अलौकिकः। सुतरां साहित्ये रसस्य

मुख्याश्रयः सहृदयः न तु अनुकार्यः नायकः। अतएव भट्टलोल्लटस्य मतमिदं भ्रान्तरूपेण उपस्थाप्यते। भट्टनायकेन तु भट्टलोल्लटस्य मतं समालोचितम्। तस्य मते दर्शकः स्वयं यदा नायकनायिके न अपश्यत् तत्कृते अनुकार्यनायक-नायिकयोः रत्यादीन् अनुकारकनटनट्योः आरोप्य रसास्वादनं न सम्भवति।

भट्टलोल्लटः उक्तवान् यत्- दर्शकस्य रज्ज्वौ सर्पभ्रमस्यैव नटनट्यां नायकनायिकयोः भ्रमः उत्पद्यते इति। परवर्तिनि काले आचार्याः भट्टलोल्लटस्य मतमिदं नैव स्वीकृतवन्तः।

न्यायशास्त्रावलम्बनेन आचार्यः शङ्कुकः रससूत्रं व्याख्यायितवान्। एतस्मादेव आचार्यः शङ्कुकः अनुमितिवादी इति ज्ञायते। आचार्यस्य शङ्कुकस्य कोऽपि ग्रन्थः नोपलभ्यते। केवलं अभिनवगुप्तस्य अभिनवभारतीटीकायां रससूत्रविषये शङ्कुकस्य मतम् आलोचितम् अस्ति। शङ्कुकः भट्टलोल्लटस्य इव रसः अनुकार्यः नायकाश्रितः इति न स्वीकरोति। शङ्कुकस्य मते सहृदयकर्तृकस्थायिभावस्य अनुमानमेव रसानुभूतिः। स्थायिभावेन विभावानुभावव्यभिचारिभावयोः परस्परमनुमाप्यानुमापकसम्बन्धः वर्तते। स्थायिभावः अनुमाप्यः विभावानुभावव्यभिचारीभावः अनुमापक इति। शङ्कुकनये रससूत्रे 'निष्पत्ति' इति पदस्यार्थः अनुमितिः।

अधुना प्रश्नः उत्थाप्यते यत् स्थायिभावस्य अनुमितेः कः आश्रयः? शङ्कुकस्य मते अनुकर्ता नटी स्थायीभावस्यानुमानं करोति। किन्तु नटादौ अनुकार्यः कथं नायकादीन् अभिन्नं प्रतीयते इति। तदुत्तरे शङ्कुकः उक्तवाने 'चित्रतुरगन्यायः' इत्यनुसृत्य अभिन्नः प्रतीतः। दार्शनिकानां मते ज्ञानं चतुर्विधं सम्यक्, मिथ्या, संशयः, सादृश्यः इति। किन्तु चित्रे तुरगस्य ज्ञानं सम्यक्, मिथ्या, संशयः, सादृश्यात् भिन्नम्। चित्रे तुरगात् प्रकृततुरगस्य ज्ञानं न भवति। अतः इदं न सम्यक् ज्ञानम्। चित्रे तुरगं दृष्ट्वा प्रकृततुरगस्य भ्रमः न जायते। अतः इदं मिथ्याज्ञानमपि न। इदं तुरगस्य चित्रं न अन्यस्य चित्रं इत्थं संशयज्ञानं न भवति। चित्रे तुरगेण साकं प्रकृततुरगस्य सादृश्यं नास्ति। तस्मात् इदं सादृश्यज्ञानमपि न। अनुरूपेण नाट्ये नटात् अनुकार्यनायकस्य ज्ञानं न भवति। नटं दृष्ट्वा अनुकार्यनायकस्य भ्रमः न भवति। एषः नटः उत अनुकार्यनायकः इत्थं संशयज्ञानमपि न भवति। नटेन साकं अनुकार्यनायकस्य न सादृश्यात् इदं सादृश्यज्ञानमपि न भवति। अनेन प्रकारेण नटस्य अनुकार्यस्य च अभिन्नः प्रतीतिः जायते। दुष्यन्तादिनायकस्य प्रतीतिः अनुमिता भवति चेत् नायकनायिकादेः रतिः प्रकृतिश्च नटे अनुमीयते। अतः सम्यक्-मिथ्या- संशयः-सादृश्यमित्यादीनां लौकिकज्ञानात् भिन्ने नटे रत्यादीनां अनुमानमलौकिकानुमानज्ञानरूपेण प्रतीतं भवति।

अर्वाचीनाचार्याः 'चित्रतुरगन्याय' इत्यस्य समालोचनां कृतवन्तः। विरोधिनां मते अभिनयदर्शनकाले अन्तिमक्षणपर्यन्तमनुकर्ता अनुकार्यरूपेण प्रतीतः न भवति। द्वितीयतः अनुमानात् सर्वदा सुखं न लभ्यते, यतो हि क्रुद्धव्यक्तिं दृष्ट्वा क्रोधस्यानुमानं भवति, आनन्दानुभवः न भवति।

भट्टनायकः सांख्यदर्शनेन सह रसतत्त्वस्यापि आलोचनां कृतवान्। तस्य रसव्याख्या भुक्तिवादनाम्ना परिचीयते। 'काव्यस्यात्मा रसः' इति भट्टनायकस्य मतम्। परन्तु सः ध्वनिविरोधी। भट्टनायकरचितग्रन्थः 'हृदयदर्पणम्' अधुना नोऽपलभ्यते। भट्टनायकमतेन रसः नोत्पद्यते, नानुमीयते, न चात्मगतः न परगतः। रसः यदि आत्मगतः भवेत्तर्हि रसस्य विभावस्यापि आत्मगतत्वं स्वीकर्तव्यम्, परन्तु तथा न भवति। रसस्य परगतत्वात् ताटस्थ्यं संगच्छते। शङ्कुकस्य मते दर्शकः परगतसुखस्य अनुमानं कृत्वा आनन्दं लभते किन्तु न सम्भवति। रसस्य कार्यत्वमपि न सिद्ध्यते। यतः रसस्य कारणं विभावादिः न वास्तविकः। अवास्तविकस्य न सम्भवति। रसः भुज्यते इति भट्टनायकस्य मतम्। सहृदयः स्वयं रसभोगं करोति। भट्टनायकस्य मते निष्पत्तिशब्दस्यार्थः भुक्तिः। तेन मतेन साहित्यस्य शक्तित्रयं वर्तते- १. अभिधा २.

भावना भावकत्वं वा ३. भोजकत्वं वा भोगिकरणम्। भट्टनायकस्य मते अभिधा भवति शब्दाभिधानात् प्राप्तः सरलार्थः। अभिधातः वाच्यार्थात् वा रसनामकालौकिकानुभूतिर्नभवति। तस्मात् सः कविकर्मणि किञ्चित् विलक्षणं परिकल्पितवान्। इयमेव भावना साधारणीकृतिः वा। भावनया साधारणीकृतिना दर्शकः विभावादीभिः एकात्मतामनुभवति। लौकिकज्ञानात् नाट्याभिनयदर्शनजनितज्ञानस्य पार्थक्यम् अस्ति। लौकिक-आनन्दः व्यक्तेः व्यक्तित्वबोधेन सङ्कीर्णा भवति। यस्य पुत्रः जयं लभते सः एक एव आनन्दम् अनुभवति। परन्तु नाट्ये विभावेन सह पाठकस्य दर्शकस्य वा भेदज्ञानं तत्कालिकरूपेण आच्छादितं भवति। इयमेव साधारणीकृतिः। साहित्ये भावना एव साधारणीकृतेः सञ्चारणं भवति। भट्टनायकस्य मते तृतीयः शक्तिः भोजकत्वम्। इदं भोजकत्वं सहृदयस्य श्रोतुः वा पाठकस्य मानसव्यापारः। अधुना प्रश्नः उदेति यत् कथं साहित्यात् आनन्द उपलभ्यते। तद्विषये भट्टनायकेन उच्यते सहृदयचित्ते भोजकत्वं विराजते। रसास्वादः एव ब्रह्मास्वाद इति भट्टनायकमतम्। तन्मते स्थायिभावस्य एव रसरूपेण परिणतिः भवति। अस्य रसस्य भोक्ता भवति दर्शकः पाठकः वा। भट्टनायकस्य रसव्याख्यायाः केचन सिद्धान्ताः अभिनवाः।

**प्रथमतः** भट्टलोल्लटः शङ्कुकः च रसस्य प्रतीतेः लौकिकानुभावस्य विषये उक्तवन्तौ। परन्तु भट्टनायकः अलौकिकानुभवस्य वार्ता कृतवान्। अनेन भट्टनायक एव सर्वप्रथमः यः रसानुभूतेः अतीन्द्रियत्वं प्रचारितवान्।

**द्वितीयतः** सः रसभोगविषये वार्तां प्रचार्य रसव्याख्यायाः स्पष्टतां सम्पादितवान्।

**तृतीयतः** स एव साधारणीकरणस्य कर्ता।

**चतुर्थतः** भट्टनायकः सर्वप्रथमं रसव्याख्यायां काव्यस्य नाट्यस्य च उभयोः आलोचनाम् अकार्षीत्।

अद्वैतवेदान्तं निर्भृत्य अभिनवगुप्तः रससूत्रस्य व्याख्यां कृतवान्। आचार्याभिनवगुप्तस्य मतं पण्डितसमाजे अभिव्यक्तिवाद इति नाम्ना ख्यातम्। अभिनवगुप्त एव रसचर्चायाः सर्वश्रेष्ठः मीमांसकः। तन्मते रसाभिव्यक्तिः भवति। भट्टनायकः कविकर्मणि तिस्रः शक्तीः कल्पितवान्। ताः अभिधा, भावना, भोजकत्वञ्च। अभिनवगुप्तः एतेषां तिसृणां स्वीकारं न कृतवान्। तन्मते भावना भोजकत्वञ्च शक्तिद्वयस्य अस्तित्वं कल्पनायाः प्रयोजनं नास्ति। अस्य अपूर्वनामकरणे किं प्रयोजनमस्ति? भट्टनायकः साधारणीकरणार्थं भावना इति व्यापारस्य स्वीकारं कृतवान्, परन्तु तेन नास्ति प्रयोजनम्। यतः प्रकारान्तरेण साधारणीकरणञ्च सम्भवम्। अतः भट्टनायकस्य भावना इति व्यापारः गौरवदोषदुष्टः। भट्टनायकमते भावनया विभावानुभावादिः स्ववैशिष्ट्यं परित्यज्य साधारणीकृतरूपेण सहृदयहृदये प्रतिभातः भवति। रत्यादिस्थायीभावाः अपि तस्य चित्ते प्रकाशिताः भवन्ति। अर्थात् सहृदयस्य स्वचित्ते रत्यादिवासनाभावोऽपि स रसग्रहणे समर्थो भवति। अभिनवगुप्तमते इदमसम्भवम्। शृङ्गारादयः यदि सहृदयहृदये निरपेक्षाः भवेयुः चेत् सर्वाः व्यक्तयः समेषां रसानामुपलब्धौ समर्थाः स्युः। अत भट्टनायकस्य भावकत्वस्वीकारः अप्रयोज्यः।

अभिनवगुप्तमते विभावानुभावव्यभिचारिस्थायिभावाः सहृदयचित्ते तिष्ठति। एतेषां चतुर्णां सहृदयचित्ते अभावात् सामानाधिकरण्याभावः भवेत्, सामानाधिकरण्यस्याभावे व्यापारस्य अवास्तवता आपतति। यत्र कारणं तत्रैव कार्यं भवेत् इति साधारणनियमः। सहृदयः सामाजिकचित्तेन रसास्वादं करोति, अतः रसानामुपादानानि सामाजिकचित्ते एव तिष्ठन्ति। अतः रसरूपः कार्यः विभावादिरूपं कारणं सहृदयचित्ते एव तिष्ठति।

अभिनवगुप्तस्य मते निष्पत्तिशब्दस्यार्थः अभिव्यक्तिः। अभिव्यक्तिं विहाय रसप्रतीतिः न भवति। अस्माकं मते संवेदनम् एव आनन्दरूपेण आस्वादितं भवति। अतः यत् अभिव्यक्तं भवति तस्य रसास्वादत्वं न तु रसत्वम् इति लक्षणीयम्। अयं रसः अलौकिकः विभावादीनां अलौकिकत्वात्। रसस्य उपादानानि पृथक्रूपेण आस्वादितानि न भवन्ति। स्थायीभावः सहृदयचित्ते एव संस्काररूपेण तिष्ठति। विभावादि साधारणीकृतः भवति। अस्य वासना नैसर्गिकः। संस्कारः जन्मान्तरीयं भवति। तेनेदं वीतविघ्नप्रतीतिः उच्यते।

अभिनवगुप्तमते सहृदयस्य चित्तात् विघ्नानाम् अपसारणाद् एव रसस्य अभिव्यक्तिः भवति। परवर्तिनि काले जगन्नाथोऽपि अस्य भग्नावरणाचित् इति नाम्ना व्याख्यां कृतवान्। वेदान्ते चित्स्वरूपम् आत्मानं भ्रान्तयः आच्छादयन्ति। तेषाम् अपसारणात् एव चितः स्वरूपोपलब्धिः भवति। अभिनवगुप्तोऽपि उक्तवान् यत् सहृदयस्य मनसि स्थायिभावरूपवासना विद्यते। तस्याः प्रतीतौ विघ्नानाम् अपसारणाद् रसस्य अभिव्यक्तिः भवति।

**संकेतपञ्चिः**

ना. शा.= नाट्यशास्त्रम्

भ. र. सि.= भक्तिरसामृतसिन्धुः

सम्प.= सम्पादकः

**उल्लेखपञ्जिः**

१. ना. शा.- १/१७

२. ना. शा.- ६ /३३-३४

३. ना. शा. (द्वि. ख.), सम्पा. पारसनाथ-द्विवेदी, पृ. - ३४

४. भ. र. सि.- २.१.१४

**परिशीलितग्रन्थपञ्जिः**

अमरसिंह। *अमरकोष*। सम्पा.- श्रीमद्गुरुनाथ विद्यानिधि भट्टाचार्य। कलिकाता: संस्कृत पुस्तक भाण्डार, १४१७ (बङ्गाब्द)।

आनन्दवर्धन। *ध्वन्यालोकः( प्रभा-व्याख्यासहितः)*। सम्पा.- विष्णुपद भट्टाचार्य। कोलकाता: संस्कृतसाहित्यपरिषत्, १९८६।

पण्डितराजजगन्नाथः। *रसगङ्गाधरः*। सम्पा.- श्रीमधुसूदन-शास्त्री। वाराणसी: काशीहिन्दुविश्वविद्यालयीयसंस्कृतसाहित्यानुसन्धानम्, २०२० वि.स...।

पाणिनि। *अष्टाध्यायी*। सम्पा. तपनशङ्कर भट्टाचार्य। कलिकाताः संस्कृत वुक डिपो, २००४ (प्रथम संस्करण)।

भट्टाचार्य, विष्णुपद। *साहित्यमीमांसा*। कोलकाता: विश्वभारती ग्रन्थालय, १३६७ (बङ्गाब्द)।

भरतः। *नाट्यशास्त्रम्* ( १-४ खण्ड)। सम्पा.- साहित्यचार्य- श्रीमधुसूदन- शास्त्री। वाराणसी: काशीहिन्दुविश्वविद्यालयः,१९७१।

भरत। *नाट्यशास्त्रम्*। सम्पा.- बावुलालशुक्लशास्त्री। वाराणसी: चौखम्बा संस्कृत सीरिज आफिस, १९७२।

भरतमुनि। *नाट्यशास्त्रम्*( १-४ खण्ड)। सम्पा.- डा. पारसनाथद्विवेदी। वाराणसी: सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, १९९२।

मुखोपाध्याय, रमारञ्जन। *रससमीक्षा*। कलकाता: संस्कृत पुस्तक भाण्डार, १३८४ (बङ्गाब्द)।

विश्वनाथकविराजः। *साहित्यदर्पणः*। सम्पा.- आचार्य्य- कृष्णमोहन- शास्त्री। वाराणसी: चोखाम्बा संस्कृत संस्थान्, २०१८।

सायणमाधवाचार्यः। *सर्वदर्शनसंग्रहः*। सम्पा. वासुदेव- शास्त्री। मुम्बाइः निर्णयसागरमुद्रणालयः, १९२४।

# न्यायनये वृत्तिनियामकसम्बन्धः- एको विमर्शः

प्रियाङ्का-सरदारः

**सारसंक्षेपः**

न्यायदर्शने पारिभाषिकपदार्थेषु सम्बन्धः एकः पारिभाषिकः पदार्थः। सम्बन्धिभिन्नत्वे सति विशिष्टबुद्धिनियामकत्वं खलु सम्बन्धत्वम्। विशिष्टबुद्धिविषये विशेष्यविशेषणभिन्नो यः पदार्थो विद्यते, स एव सम्बन्धः। तदनन्तरं सम्बन्धभेदयोः आलोचनं कृतम्। साधारणतः सम्बन्धश्च द्विविधः। यथा- वृत्तिनियामको वृत्त्यनियामकश्चेति। यस्मिंश्च सम्बन्धे संसर्गतारूपेण भासमाने सति एकस्मिन्वस्तुनि अपरं वस्तु प्रतीयते पुनश्च वस्तुनोर्द्वयोर्मध्ये आधाराधेयभाव आश्रयाश्रयिभाव वा प्रतीयते, सः सम्बन्धो वृत्तिनियामकसम्बन्ध इति कथ्यते। वृत्तिनियामकसम्बन्धाः समवायसंयोगस्वरूपाः। ततश्च तेषामपि वृत्तिनियामकसम्बन्धभेदानां सोदाहरणं लक्षणोपस्थापनपूर्वकं यथामति आलोचनं प्रबन्धेऽस्मिन्क्रियते।

**कुञ्चिकाशब्दः**

सम्बन्धः, वृत्तिनियामकसम्बन्धः, वृत्त्यनियामकसम्बन्धः, संयोगः, समवायः, स्वरूपः।

पारिभाषिकशब्दबाहुल्याद् नव्यन्यायः खलु तत्त्वजिज्ञासुनां सविधे कदाचिद् दुर्बोध्यमपि प्रतिभाति। परन्तु न्यायनये प्रवेशार्थं पारिभाषिकशब्दज्ञानम् आवश्यकमेव। तत्र पारिभाषिकशब्दसमूहे सम्बन्धोऽपि एकः पारिभाषिकः शब्दः।

'सम्बध्यते इति'- सम् इत्युपसर्गपूर्वकात् बन्ध्- धातोः घञ्प्रत्यये निष्पन्नोऽयं सम्बन्ध इति शब्दः। सम्बन्धस्य नामान्तरं खलु सन्निकर्षः। येन द्वयोर्मध्ये आधाराधेयभावः कार्यकारणभावः विशेष्यविशेषणभावः साध्यसाधकभावः व्याप्यव्यापकभावो प्रकाश्यते, स एव सम्बन्धपदवाच्यः। यथा- 'भूतले घटः' इत्यत्र घट इति आधेयपदवाच्यः भूतलञ्च आधारः। नियामकः सम्बन्धः खलु संयोगः। अत एवात्र आधाराधेयसम्बन्धो विद्यते। पुनश्च वह्निधूमयोर्मध्ये संयोगसम्बन्धेन साध्यसाधकभावो व्याप्यव्यापकभावो वा विद्यते। अत्र धूमो व्याप्यो वह्निश्च व्यापकः, उभयोरत्र संयोगसम्बन्धः। सम्बन्धलक्षणप्रसङ्गे जगदीशतर्कालङ्कारैः *सिद्धान्तलक्षणदीधिति*टीकायामुक्तम्- 'विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमेव सम्बन्धत्वम् इति भावः'[१] इति। अर्थात् विशिष्टबुद्धिविषये विशेष्यविशेषणभिन्नो यो विद्यते, स एव सम्बन्धः। 'विशेष्यभिन्नत्वे सति विशेषणभिन्नत्वे सति विशिष्टबुद्धिनियामकत्वं सम्बन्धत्वम्'। विशिष्टबुद्धिस्थले त्रिस्रो विषयताः अवभासन्ते। विशेष्यताख्यविषयता, विशेषणताख्यविषयता, संसर्गताख्यविषयता च। 'रक्तो घटः' इत्यत्र घट इति विशेष्यपदम्। अत एवात्र घटनिष्ठविशेष्यता विद्यते। 'रक्तः' इति खलु विशेषणपदम्। अतोऽत्र रक्तनिष्ठविशेषणता विद्यते। घटे रक्तरूपं समवायसम्बन्धेन विद्यते। अतः समवाय इत्यत्र संसर्गताख्यविषयता अस्ति। अत्र शाब्दबोधो भवति 'रक्तनिष्ठविशेषणतानिरूपितसमवायनिष्ठसंसर्गतानिरूपित- घटनिष्ठविशेष्यतात्मकं ज्ञानम्'।

वृत्तिनियामक-वृत्त्यनियामकभेदेन सम्बन्धः द्विविधो भवति। वृत्तिनियामकसम्बन्धलक्षणप्रसङ्गे *नव्यन्यायभाषाप्रदीप*ग्रन्थे उक्तमस्ति-'यस्मिंश्च सम्बन्धे सति एकस्मिन् अपरस्य वृत्तिता, आधाराधेयभावः, आश्रयाश्रयिभावो वा प्रतीयते, स सम्बन्धो वृत्तिनियामकः'[२]। वृत्तिनियामकसम्बन्धाः समवायसंयोगस्वरूपाः। यस्मिंश्च सम्बन्धे संसर्गतारूपेण भासमाने सति एकस्मिन्वस्तुनि अपरं वस्तु प्रतीयते, पुनश्च वस्तुनोर्द्वयोर्मध्ये आधाराधेयभाव आश्रयाश्रयिभावो वा प्रतीयते, सः सम्बन्धो वृत्तिनियामकसम्बन्ध इति निगद्यते। वृत्तौ तिष्ठति वृत्तिता आधेयता वा, तस्याः वृत्तितायाः नियामकः प्रयोजको वा भवति वृत्तिनियामकः। आधेयगता या वृत्तिता, सा आधेयता। आधारगता

या वृत्तिता, सा आधारता। आधेयता आधारतायाः सापेक्षिका। तस्मादेव वृत्तिनियामकसम्बन्धे आधाराधेयभाव आश्रयाश्रयिभावो वा प्रतीयते। आधारे अधिकरणे वा सप्तमीविभक्तिर्भवति। यथा-'भूतले घटः' इति। अत्र भूतलमस्ति आधारः। अतो भूतले इत्यत्र सप्तमीविभक्तिः प्रयुक्ता। अत्र शाब्दबोधो भवति 'भूतलनिष्ठाधारतानिरूपित-संयोगसंसर्गावच्छिन्न-घटनिष्ठाधेयतावान् घटः'। 'घटवद् भूतलम्' इत्यत्र भूतलमाधारः घटश्च आधेयः। आधेयत्वाद् घटशब्दोत्तरं मतुप्प्रत्यये'घटवदि'ति पदस्योपपत्तिः। अर्थाद् घटविशिष्टं भूतलमिति बोध्यते। अत्र भूतलमिति विशेषम्, घटः इति विशेषणम्। विविधेष्वर्थेषु मतुप्प्रत्यया भवन्ति। प्रसङ्गेऽस्मिन् *सिद्धान्तकौमुद्या*मुक्तं भट्टजीदीक्षितपादेन-

> भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
> संसर्गेऽस्ति विवक्षायां भवन्ति मतुवादयः।।[३] इति।

वृत्यनियामक इति अपर एकः सम्बन्धोऽस्ति। यस्मिन् सम्बन्धे सतिद्वयोर्वस्तुनोः आधाराधेयभावो न प्रतीयते, सम्बन्धमात्रमेव भासते, स वृत्यनियामकसम्बन्ध इत्युच्यते। यस्मिन् सम्बन्धे आधाराधेयभावरूपा वृत्तिता न प्रतीयते, सम्बन्धिमात्रं प्रतीयते, स वृत्यनियामकसम्बन्ध इत्युच्यते। वृत्यनियामकसम्बन्धाश्चैते भवन्ति- तादात्म्य-कालिक-प्रतियोगिता-अनुयोगिता-स्वामित्वादयः।

अधुना वृत्तिनियामकसम्बन्धाः यथामति आलोच्यन्ते।

**संयोगः**

'संयुज्यते अनेन' इति विग्रहणेन येन संसर्गेण द्रव्यद्वयं संयुक्तं भवति, स संसर्गः संयोग इति कथ्यते। सम्पूर्वकात् यूज्धातोः घञ्प्रत्यये करणवाच्ये निष्पन्नोऽयं संयोगशब्दः। संयोगः खलु द्रव्याणां सामान्यगुणः। द्रव्याणां सामान्यगुणाश्च- संख्यापरिमाणपृथकत्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रव्यसंस्काराश्च। प्रसङ्गेऽस्मिन् *तर्कभाषा*यामुक्तमस्ति- 'संयोगः संयुक्तव्यवहारहेतुर्गुणः। स च द्रव्याश्रयोऽव्याप्यवृत्तिश्च'[४]। सम्बन्धोऽयं साक्षात्सम्बन्धस्य एकः प्रकारः। युतसिद्धपदार्थयोः सम्बन्धः खलु संयोगः।

संयोगस्य जातिघटितलक्षणप्रसङ्गे *तर्कभाषा*यामुक्तमेव- 'संयुक्तव्यवहारविषयवृत्तिगुणत्वव्याप्यजातिमान् संयोगः'[५] इति। अर्थात् संयुक्तव्यवहारविषये अवस्थिता या गुणत्वव्याप्यजातिः,तस्याः जात्याश्रयो यो गुणः, स एव संयोगः। द्रव्यमिदमनेन द्रव्येन संयुक्तमित्यकारकसंयोगविषये प्रत्यक्षज्ञानरूपोयो व्यवहारः, तस्य व्यवहारस्य विषयस्य संयोगत्वात्, संयोगेऽस्मिन् विद्यमाना या जातिः, सा जातिः संयोगत्वजातिः। सा संयोगत्वजातिः अखिलसंयोगेषु विद्यते। लक्षणे 'संयुक्तव्यवहारविषयवृत्तिरि'ति पदेन गुणत्वादिव्याप्यरूपत्वादिजातिग्रहणात् रूपादिगुणे अतिव्याप्तिः वारिता भवति। 'गुणत्वव्याप्य'पदेन संयोगवृत्तिं गुणत्वं सत्ताजातिं च गृहीत्वा रूपादिगुणे द्रव्यगुणकर्मसु च लक्षणस्य अतिव्याप्तिं वारयति।

अन्नम्भट्टेन *तर्कसंग्रह*ग्रन्थे संयोगस्य भेदद्वयं स्वीकृतम्। *तर्कसंग्रहदीपिका*यामुक्तम्- 'संयोगो द्विविधः- कर्मजः संयोगजश्चेति'[६]। कर्मजन्यस्य संयोगस्य पुनरपि प्रकारद्वयं कथितम्- अन्यतरकर्मजः उभयकर्मजश्चेति। परन्तु अन्नम्भट्टेन उभयकर्मजन्यसंयोगो नाङ्गीकृतः। तन्मते कर्मजन्यसंयोगः अन्यतरसंयोगजन्यः, न अन्यः। *भाषापरिच्छेद*ग्रन्थे संयोगस्य त्रयः भेदाः उक्ताः यथा- एकतरकर्मजः, उभयकर्मजः, संयोगजः।

> अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः।

कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्म्मजः।
तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः।
आदिमः शेयेनशैलादि-संयोगः परिकीर्त्तितः।।[७]इति।

पुनश्च *पदार्थधर्मसंग्रहे* संयोगस्य विभागविषये ग्रन्थकारेणोक्तम्- 'स च त्रिविधः। अन्यतरकर्मजः उभयकर्मजः संयोगजश्चेति'[८]। अधुना संयोगस्य भेदत्रयविषये मया सोदाहरणमालोच्यते। द्वयोरयुतसिद्धद्रव्ययोः एकस्य कर्मवशाद् यदा द्वयोः संयोगो भवति, स संयोगोऽन्यतरसंयोग इत्युच्यते। उदाहरणप्रसङ्गे *भाषापरि*च्छेदग्रन्थे कारिकायामुक्तमस्ति- 'आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः'[९]। श्येन यदा उड्डयन् पर्वतं वृक्षं वा उपवसति, तदा श्येनस्य उड्डयनक्रियया कर्मरहितस्य पर्वतस्य कर्मरहितस्य वृक्षस्य वा संयोगो भवति। अत एव संयोगोऽयमन्यतरकर्मजसंयोग इत्युच्यते। पर्वतश्येनसंयोगं प्रति पर्वतो समवायिकारणम्। किञ्च पक्षिण उड्डयनक्रिया भवति असमवायिकारणम्। एवमेव हस्तक्रियया हस्तपुस्तकयोः संयोगः सम्पद्यते। अतोऽत्र अन्यतरकर्मजसंयोगो भवति। किञ्च आत्मना मनसः संयोगः अन्यतरकर्मजसंयोगः। यतो हि मनसः गतिक्रियया आत्मना सह संयोगः सम्भाव्यते।

उभयकर्मजो नाम उभयद्रव्ययोः कर्मणा यः संयोगः, स उभयकर्मजसंयोग इति। उदाहरणरूपेण *भाषापरि*च्छेदग्रन्थे उच्यते- 'मेषयोः सन्निपातो यः स द्वितीय उदाहृतः'[१०] इति। अर्थात् द्वयोर्मेषयोर्विवदमानयोः परस्परं सम्मुखमग्रसरन्तोः तयोः अग्रसरणकर्मणा उभयोर्यः संयोग उत्पद्यतेः, स एव उभयकर्मजसंयोग इत्युच्यते।

संयोगजसंयोगप्रसङ्गे *तर्कभाषा*ग्रन्थे उक्तमस्ति- 'संयोगजो यथा कारणाकारणसंयोगात्कार्याकार्यसंयोगः। यथा- हस्ततरुसंयोगेन कायतरुसंयोगः'[११] इति। हस्तक्रियया हस्तवृक्षसंयोगो विद्यते। अत्र हस्तस्य क्रियावशाद् हस्तवृक्षयोः संयोगो भवति। हस्तवृक्षसंयोगे सति वृक्षशरीरयोरपि संयोग उत्पद्यते। तत्र क्रिया न विद्यते एव। शरीरवृक्षयोः क्रियाहीनो यः संयोगः, स एव संयोगजसंयोग इति।

### संयोगसम्बन्धस्य महत्त्वम्

वहिरिन्द्रियजन्ये प्रत्यक्षज्ञाने आत्मा मनसा, मन इन्द्रियेण, इन्द्रियञ्चार्थेन संयुज्यते। ततो ज्ञानमुत्पद्यते। यदि संयोगसम्बन्धो नाङ्गीक्रियते, तर्हि आत्मना मनसः, मनसा इन्द्रियस्य, इन्द्रियेण च अर्थस्य संयोगो न सम्भाव्यते। ततो ज्ञानोत्पत्त्यभावः स्यात्।

### शब्दोत्पत्तिप्रसङ्गे संयोगस्य प्रयोजनम्

ध्वन्यात्मको वर्णात्मकश्चेति द्विविधः शब्दः। तत्र ध्वन्यात्मको नाम हस्तात् पतितेन घटेन घटमृत्तिकासंयोगे यः शब्द उत्पद्यते स शब्दः। प्रसङ्गेऽस्मिन् *दीपिका*टीकायामुच्यते- 'तत्र आद्यो भेरीदण्डसंयोगजन्यः'[१२]। वर्णात्मकस्तु शब्दः अ आ क ख इत्यादयः। ढक्कामृदङ्गघण्टादिभ्य उत्पन्नः शब्दः ध्वनिः। किञ्च कण्ठाताल्वाद्यभिघातसंयोगादुत्पन्नः शब्दः वर्णः। वर्णात्मकशब्दे कण्ठताल्वादिना आकाशस्य संयोगे सति अ आ इत्यादीनां वर्णानामुत्पत्तिः। संयोगसम्बन्धस्य स्वीकाराभावे वर्णात्मकशब्दोत्पत्तिर्न भवति।

### समवायः

नव्यन्यायस्वीक्रितेषु सप्तपदार्थेषु समवायः खलु षष्ठः पदार्थः। पदार्थत्वेऽपि समवायः सम्बन्धस्वरूपः। *भाषापरि*च्छेदग्रन्थे समवायस्य वृत्तित्वविषये विवृतमस्ति- 'अवयवावयविनोर्जातिव्यक्त्यो-र्गुण-गुणिनोः क्रिया-

क्रियावतोर्नित्यद्रव्य-विशेषयोश्च यः सम्बन्धः स समवायः। समवायत्वं नित्यसम्बन्धत्वम्'[१३] इति। नित्यसम्बन्धः खलु समवायः। अत आचार्यविश्वनाथेन समवायलक्षणमुक्तम्- 'नित्यसम्बन्धत्वं समवायत्वम्' इति। अर्थात् 'नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्' इति। नित्यत्वं समवायस्य समानाधिकरणम्। अत एव नित्यत्वसामानाधिकरणसम्बन्धत्वमेव समवायस्य लक्षणम्। समवायलक्षणे 'नित्यत्वे' इति पदाभावे अनित्यसंयोगादौ अतिव्याप्तिर्भवेत्। सम्बन्धत्वमिति पदस्यानुपादाने नित्यद्रव्येषु परमाणुषु गगणादौ च अतिव्याप्तिः स्यात्। नित्यद्रव्येषु समवायलक्षणस्य अतिव्याप्तिनिवारणार्थं 'सम्बन्धिभिन्नत्वे' इति पदं योजनीयम्। अतः सम्बन्धिभिन्नत्वे सति नित्यसम्बन्धत्वमिति समवायस्य लक्षणम्। समवायस्य लक्षणप्रसङ्गे *भाषापरिच्छेद*ग्रन्थस्य*मुक्तावली*संग्रहे पञ्चाननभट्टाचार्येणोच्यते- 'सम्बन्धि-भिन्नत्वे सति नित्यत्वे सति सम्बन्धत्वं समवायत्वमिति समवायलक्षणनिष्कर्षः'[१४] इति।

अयुतसिद्धयोः सम्बन्धः खलु समवायः। अयुतसिद्धविषये केशवमिश्रेण *तर्कभाषाया*मुक्तम्- 'ययोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ'[१५]इति। अर्थाद् विनाशभिन्नः दशायां ययोः पदार्थयोरेकः अपराश्रितमेवावतिष्ठते, तौ अयुतसिद्धौ। युज्धातोः कर्मणि क्तप्रत्यये युतशब्दो निष्पन्नो जातः। युतसिद्धो नाम पृथक्सिद्धः। अयुतसिद्धश्च अपृथक्सिद्ध इति। 'तन्तुषु पटः' इत्यत्र पटः समवायसम्बन्धेन तन्तुषु वर्त्तते। अतः तन्तु-पटौ अयुतसिद्धौ। पुनः 'रक्तो घटः' इत्यत्र रक्तरूपं समवायसम्बन्धेन घटे विद्यते। के तावद् अयुतसिद्धपदार्था इत्यस्मिन् विषये *तर्कभाषा*कारेण केशवमिश्रेण *तर्कभाषाया*मुक्तम्- अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति'[१६]।

**समवायसम्वन्धस्य महत्त्वम्**

कार्यकारणभावतत्त्वे समवायस्योपादेयता विद्यते। कपाले समवायसम्बन्धेन घट उत्पद्यते। अत्र कपालं घटस्य समवायिकारणं घटश्च कार्यम्। अत उच्यते- 'यत्र समवायेन कार्यं तत्र तादात्म्येन द्रव्यम्' इति। अर्थात् यत्र समवायसम्बन्धेन कार्योत्पत्तिर्भवति, तत्र तादात्म्यसम्बन्धे द्रव्यं कारणं भवति। कारणतावच्छेदकसम्बन्धस्तादात्म्यम्, कार्यतावच्छेदकश्च सम्बन्धः समवायः। जन्यभावपदार्थोत्पत्तौ कार्यतावच्छेदकसम्बन्धरूपेऽपि समवायस्यास्तित्वम् अङ्गीकर्तव्यम्। अतः कार्यकारणतत्त्वे समवायस्योपादेयता विद्यते।

**लौकिकसन्निकर्षरूपेण समवायस्य प्रयोजनीयता**

षड्विधेषु सन्निकर्षेषु समवाये, संयुक्तसमवाये, संयुक्तसमवेतसमवाये, समवेतसमवाये च समवायसम्बन्धस्य प्रयोजनमवश्यमेव अङ्गीकर्तव्यम्।

सोदाहरणं वक्तुं युज्यते यत्-

कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यभिधीयते। शब्दगुणकमाकाशमिति। आकाशेन शब्दस्य समवायसम्बन्धः। गुणगुणिनोः समवायात्। अत्र गुणः शब्दः गुणी चाकाशः।

शब्दत्वजातिसाक्षात्कारे समवेतसमवायः सन्निकर्षः भवति। कर्णविवररूपाकाशे शब्दः समवेतो जायते। तत्र शब्दे शब्दत्वजातिः समवायसम्बन्धेन विद्यते। पुनश्च संयुक्तसमवायसन्निकर्षविषये संयुक्तसमवेतसमवायसन्निकर्षविषये च रूपं द्रव्ये रूपत्वजातिश्च रूपे समवायसम्बन्धेन विद्यते। अत एव प्रत्यक्षज्ञाने समवायस्य महती उपादेयता अस्ति।

**स्वरूपसम्बन्धः**

न्यायवैशेषिकनये स्वरूपसम्बन्धस्य प्रयोजनीयता विद्यते। अभावप्रत्यक्षे विशेषणविशेष्यभावसन्निकर्षस्य प्रयोजनमस्ति। स्वरूपसम्बन्धो द्विधा विभज्यते। प्रथमः केवलस्वरूपः अपरश्च विशेषणता। विशेषणता चापि त्रिधा भवति। तद्यथा- अभावीयविशेषणता (अभावमात्रप्रतियोगिताकः, यथा भूतले घटाभावः), दिक्कृतविशेषणता, कालिकविशेषणता (दिक्कालानुकयोगिकौ जन्यमात्रप्रतियौगिकौ)। 'घटाभाववद्भूतलम्' इत्यत्र भूतलं घटाभावविशिष्टम्। अत्र भूतलमस्ति विशेष्यम्, घटाभावश्च तदभावस्य विशेषणम्। अत एव भूतलस्य विशेषणरूपेण घटाभावस्य प्रत्यक्षे आदौ भूतलेन साकं चक्षुसंयोगो भवति। तेन घटाभावेन चक्षुसंयुक्तविशेषणतासन्निकर्षोत्पद्यते। यतो हि घटाभावः चक्षुसंयुक्तस्य भूतलस्य विशेषणम्। अत एव घटाभाववद्भूतलमित्यत्र घटाभावप्रत्यक्षे चक्षुसंयुक्तविशेषणतासन्निकर्षः सञ्जायते। पुनश्च 'भूतले घटाभावः' इत्यत्र चक्षुसंयुक्तविशेष्यतासन्निकर्षो भवति। न्यायमते शाब्दबोधो भवति प्रथमान्तार्थमुख्यविशेषकः शाब्दबोधः। अर्थात् सदैव प्रथमान्तं पदं विशेष्यपदं भवति। 'भूतले घटाभावः'इत्यत्रचक्षुसंयुक्तभूतले घटाभावः विशेष्यरूपेण प्रतीयते। परमनैयायिकगङ्गेशोपाध्यायः *तत्त्वचिन्तामणि*ग्रन्थे अनुमानखण्डस्यान्तिमभागे स्वरूपसम्बन्धस्य लक्षणमेवमवदत्- 'सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वं स्वरूपत्वम्'[१७] इति। अर्थाद् विशेष्यविशेषणातिरिक्तसम्बन्धमनपेक्ष्यैव विशिष्टप्रत्यक्षस्य हेतुत्वं स्वरूपत्वम्। यथा- घटाभाववद्भूतलमित्यत्र विशिष्टप्रतीतिस्थले भूतलं विशेष्यरूपेण, घटाभावो विशेषणरूपेण विद्यते। स्वरूपसम्बन्धः विशेष्यविशेषणाभ्यामतिरिक्तो न कोऽपि पदार्थः। अत स्वरूपसम्बन्धस्य परिष्कृतं लक्षणमुच्यते- 'विशेष्यविशेषणातिरिक्तसम्बन्धनिरपेक्षविशिष्टप्रत्ययजननयोग्यत्वम्' इति।

स्वरूपसम्बन्धः पुनस्त्रिविधः। तद्यथा- कालिकस्वरूपः, दैशिकस्वरूपः, अभावीयस्वरूपश्चेति। कालिकस्वरूपसम्बन्धे सर्वेऽपि पदार्थाः जन्ये महाकाले च तिष्ठन्ति। यथा- 'इदानीं घटः' अर्थाद् एतत्कालीनघटः, 'तदानीं घटः'नाम तत्कालीनघट इत्यादिस्थले एतत्कालतत्कालादिभिः सह घटस्य यः आधाराधेयभावः प्रतीयते, सः कालिकस्वरूपसम्बन्ध इत्युच्यते। पुनश्च जलह्रदस्य जन्यवस्तुत्वाद् घटत्वं कालिकसम्बन्धेन जलह्रदेऽपि तिष्ठेत्। एवंरूपेण धूमः संयोगसम्बन्धेन जलह्रदे अविद्यमानेऽपि कालिकसम्बन्धेन स्थातुमर्हति। वह्नेरपि संयोगसम्बन्धेन जलह्रदेऽविद्यमानत्वेऽपि कालिकसम्बन्धेन विद्यमानयोग्यतास्ति। वह्न्यभावः दैशिकस्वरूपसम्बन्धः दिङ्निष्ठविशेषणता देशनिष्ठविशेषणता चेति द्रव्यर्थे प्रयुज्यते। यस्मिन्प्रदेशे तद्भावः तेन प्रदेशेन तदभावीयपदार्थस्य स्वरूपसम्बन्धः। दैशिकस्वरूपसम्बन्धे सर्वेऽपि पदार्थाः दिशि मूर्तपदार्थे च वर्तन्ते। यथा अस्यां दिशि विद्यतेऽयमित्येवंरूपेण विद्यमानं वाक्यम्। अभावीयस्वरूपसम्बन्धे तु अभावः स्वाधिकरणे विद्यते। स्वरूपसम्बन्धस्य नामान्तरं च विशेषणता। आधाराधेयभावस्य बोधकत्वात् स्वरूपसम्बन्धः वृत्तिनियामकसम्बन्ध इति। यथा- 'घटाभाववद्गृहमि'ति अत्र गृहे घटस्य अभावः अस्ति। गृहे यो घटाभावः प्रतीयते, सः स्वरूपसम्बन्धेन गृहे विद्यमानोऽस्ति।

**प्रत्यक्षज्ञाने स्वरूपसम्बन्धस्य प्रयोजनम्**

विशेष्यविशेषणभावसन्निकर्षेण अभावः प्रत्यक्षीक्रियते। विशेष्यविशेषणभावेण विशेष्यभावो विशेषणभावश्च बोध्यते। अभावीयप्रत्यक्षज्ञाने यदा अभावो विशेष्यभूतो भवति, तदा इन्द्रियसम्बद्धविशेष्यता, यदा च अभावो विशेषणभूतो भवति, तदा इन्द्रियसम्बद्धविशेषणता सन्निकर्षो भवति। प्रसङ्गेऽस्मिन् विश्वनाथन्यायपञ्चाननेन *भाषापरि*च्छेदग्रन्थे उक्तम्-

प्रत्यक्षं समवायस्य विशेषणतया भवेत्।
विशेषणतया तद्वद् अभावानां ग्रहो भवेत्॥[१८] इति।

यदि स्वरूपसम्बन्धो न स्वीक्रियते तर्हि 'भूतले घटाभावः' इत्यत्र यद्घटाभावरूपप्रत्यक्षम्, तन्न सम्भवति। अतोऽभावीयप्रत्यक्षज्ञाने स्वरूपसम्बन्धस्य महत्त्वं विद्यते।

**संकेतपञ्जिः**

तर्क.= तर्कभाषा

तर्क.सं.= तर्कसंग्रहः

तत्त्व. चि. (अनु. ख.)= तत्त्वचिन्तामणिः ( अनुमान- खण्डः)

न.भा.प्र.= नव्यन्यायभाषाप्रदीपः

प्रशस्त.= प्रशस्तपादभाष्यम्

भा.प.= भाषापरिच्छेदः

व्याप्ति. सिद्धा.=व्याप्तिपञ्चकं सिद्धान्तलक्षणञ्च

सि.कौ.= सिद्धान्तकौमुदी

सम्पा.= सम्पादकः

**उल्लेखपञ्जिः**

१. व्याप्ति. सिद्धा., सम्पा. तपनशङ्कर भट्टाचार्य्य, पृ. ५५

२. न.भा.प्र., सम्पा. महामहोपाध्याय-श्रीमहेशचन्द्रन्यायरत्न, पृ.१६

३. सि.कौ.- २८९४

४. तर्क. (द्वि. ख.), सम्पा. गङ्गाधरकरः, पृ. २५२

५. *तदेव*, पृ. २५३

६. तर्क.सं., सम्पा. नारायण-चन्द्र-गोस्वामी, पृ.२३३

७. भा.प., सम्पा. पञ्चानन- शास्त्री, पृ. ५१८

८. प्रशस्त., सम्पा. ब्रह्मचारी- मेधाचैतन्यः, पृ. २५१

९. भा.प., सम्पा. पञ्चानन- शास्त्री, पृ- ५१८

१०. *तत्रैव*

११. तर्क.(द्वि. ख.), सम्पा. गङ्गाधर- करः, पृ. २५२

१२. तर्क.सं., सम्पा. नारायण- चन्द्र- गोस्वामी, पृ. २४८

१३. भा.प., सम्पा. पञ्चानन. शास्त्री, पृ. ६८-६९

१४. *तत्रैव*

१५. तर्क.(प्र. ख.), सम्पा. गङ्गाधर- करः, पृ.३३

१६. *तत्रैव*

१७. तत्त्व. चि. (अनु. ख.), सम्पा.- कामाख्यानाथ- तर्कवागीशः, पृ.- ३२५

१८. भा.प. सम्पा. पञ्चानन- शास्त्री, कारिका संख्या-६१

**परिशीलितग्रन्थपञ्जिः**


अन्नंभट्टः। *तर्कसंग्रह*। सम्पा. नारायणचन्द्र- गोस्वामी। कोलकाताः संस्कृत- पुस्तक- भाण्डारः, १४१३ वङ्गाव्दः(पुनः संस्करणम्, १४१० वङ्गाव्दः तृतीयं परिवर्धितं संस्करणम्)।

करः, गङ्गाधरन्यायाचार्यः। *शब्दार्थ- सम्वन्ध- समीक्षा*। कलकाताः संस्कृत- वुक- डिपो, २००३ (प्रथमं संस्करणम्)।

केशवमिश्रः। *तर्कभाषा (प्रथम खण्ड)*। सम्पा. गङ्गाधर- करः। कोलकाताः महावोधि- वुक- एजेन्सि, २०१९ (तृतीयं संस्करणम्, २००८ प्रथमः प्रकाशः)।

तदेव(द्वितीयः खण्डः)। २०१९ (तृतीयः प्रकाशः, २००९ प्रथमः प्रकाशः)।

गङ्गेशोपाध्यायः। *तत्त्वचिन्तामणेः व्याप्तिपञ्चकं सिद्धान्तलक्षणञ्च*। सम्पा. तपनशङ्कर- भट्टाचार्यः। कोलकाताः संस्कृत- पुस्तक- भाण्डारः,२०१९ (प्रथमः प्रकाशः)।

पाणिनिः। *अष्टाध्यायी*। सम्पा. तपनशङ्कर- भट्टाचार्यः। कलिकाताः संस्कृत- वुक- डिपो, २००४(प्रथमं संस्करणम्)।

प्रशस्तपादाचार्यः। *प्रशस्तपादभाष्यम्( प्रथमः खण्डः)*। सम्पा. दण्डिस्वामी- दामोदराश्रम। कलकाता: संस्कृत- वुक- डिपो, २०२१ (पुनर्मुद्रणम्, २०१७ प्रथमः प्रकाशः)।

तदेव। २०१७ (द्वितीयं मुद्रणम्, २००० प्रथमः प्रकाशः)।

महेशचन्द्र- न्यायरत्नः। *नव्यन्यायभाषाप्रदीप*।सम्पा. कालिपद- तर्काचार्यः। कलिकाता:१८६२।

वाचस्पतिमिश्रः। *न्यायवार्त्तिकतात्पर्यटीका (तृतीयो भागः)*। सम्पा. अनन्तलालः ठाकुरः। निउ- दिल्लीः इन्डियान- काउन्सिल- अफ्- फिलोजफिक्याल- रिसार्च, १९९६(प्रथमः प्रकाशः)।

विश्वनाथतर्कन्यायपञ्चाननः। *कारिकावली(प्रथम-भागः)*। सम्पा. शङकररामः शास्त्री। दिल्लीः चौखम्वा- संस्कृत- प्रतिष्ठानम्, २०१६(पुणर्मुद्रितं संस्करणम्)।

विश्वनाथ- न्यायपञ्चाननः। *भाषापरिच्छेद*। सम्पा. पञ्चानन- भट्टाचार्य- शास्त्री। कोलकाताः महावोधि- वुक- एजेन्सि, १४२३ वङ्गाव्दः (पुनर्मुद्रणम्, १३७७ वङ्गाव्दः प्रथमः प्रकाशः)।

# कतिपयाभावघटितवाक्यानां न्यायदिशा शाब्दबोधविचारः

राजसी-भट्टाचार्य्यः

**सारसंक्षेपः**

न्यायदर्शने अभावस्य महत्त्वम् अतीव वर्तते। कतिपयाभावघटितवाक्यानां शाब्दबोधः कथं भवति? तद् अस्मिन् निबन्धे विचारः क्रियते। प्रथमतः अभावो द्विविधो भवति – संसर्गाभावः अन्योन्याभावश्च । तत्र संसर्गाभावः पुनस्त्रिविधो भवति – प्रागभावः, ध्वंसाभावः, अत्यन्ताभावश्च । अभावः केन सम्बन्धेन कुत्र वर्तते? तत्र प्रतियोगी को भवति? प्रतियोगितावच्छेदकः को भवति? प्रतियोगिता केन सम्बन्धेन, केन धर्मेण च अवच्छिन्ना भवति? अत्यन्ताभावघटितवाक्यानां शाब्दबोधप्रकारः कीदृशो भवति? अन्योन्याभावघटितवाक्यानां शाब्दबोधप्रकारश्च कीदृशो भवति? एतत्सर्वं सयुक्तिकम् अस्मिन् निबन्धे विस्तृतरूपेण आलोच्यते।

**कुञ्चिकाशब्दः**

अनुयोगी, अभावः, अवच्छेदकः, प्रतियोगी, प्रतियोगितावच्छेदकः, सम्बन्धः।

न्यायदर्शने अभावः खलु सप्तमपदार्थः। 'प्रमितिविषयाः पदार्थाः'[१] इति *सप्तपदार्थी*ग्रन्थे उक्तम् । नञ्-पदजन्यप्रतीतिविषयः अभावः। अथवा प्रतियोगिज्ञानविषय इत्यर्थः। *मुक्तावल्यामु*क्तम् – 'अभाववत्त्वं द्रव्यादिषट्-कान्योन्याभाववत्त्वम्'।[२] *दिनकरीटीका*याम् अभावलक्षणमेवमुक्तम् – 'भावभिन्नत्वं समवाय-सामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपम्'।[३] अभावः आदौ द्विविधः। संसर्गाभावः, अन्योन्याभावश्च। संसर्गाभावः पुनः द्विविधः – प्रागभावो ध्वंसाभावश्च। अत्यन्ताभावस्य आकारः खलु – भूतले घटो नास्ति, अथवा घटाभाववद् भूतलम्। अस्य वाक्यस्य शाब्दबोधः कीदृशो भवति? अर्थात् शाब्दबोधस्य नियमः कीदृशो भवति? तन्मया अधुना आलोच्यते। अभावघटकस्य वाक्यस्य शाब्दबोधे 'प्रतियोगी' इति पारिभाषिकशब्दस्य ज्ञानमत्र अपेक्षते। कस्तावत् प्रतियोगी? यस्याभावः स प्रतियोगी। अत एव अत्र घटस्तावत् प्रतियोगी। प्रतियोगिनि प्रतियोगिता वर्तते। अत एव घटे घटीयप्रतियोगिता वर्तते। घटे प्रतियोगिता वर्तते – इत्यत्र घटशब्दाद् उत्तरं या सप्तमीविभक्तिः वर्तते, तस्याः अर्थो निष्ठत्वम्। 'घटे प्रतियोगिता' इत्यस्य अर्थस्तावद् घटनिष्ठप्रतियोगिता। घटे विद्यमाना प्रतियोगिता। 'घटाभावः'इत्यस्य अर्थो भवति घटनिष्ठप्रतियोगिताकाभावः, घटनिष्ठप्रतियोगितानिरूपकाभावो वा। अभावः प्रतियोगितायाः निरूपको भवति। घटः कदा प्रतियोगी भवति? यदा 'घटस्य अभावः' इति उच्यते। घटनिष्ठप्रतियोगिता यस्य सः, घटनिष्ठप्रतियोगिताकः। 'घटाभाववद् भूतलम्' इति वाक्यस्य शाब्दबोधो भवति– घटनिष्ठप्रतियोगितानिरूपकाभाववद् भूतलम्। प्रतियोगिताया अपि अवच्छेदकधर्मो वर्तते। नियमो वर्तते – यस्याभावः स प्रतियोगी। प्रतियोगिनि प्रतियोगिता वर्तते। सा प्रतियोगिता केनचिद् धर्मेण, केनचित् सम्बन्धेन च अवच्छिन्ना भवति। अर्थाद्धर्मः सम्बन्धश्च प्रतियोगिताया अवच्छेदको भवति। धर्मेण सम्बन्धेन च अवच्छिन्ना प्रतियोगिता भवति। घटाभावीयप्रतियोगिताया अवच्छेदको धर्मः को भवति? प्रतियोगिता यत्र तिष्ठति, तस्य भासमानो यो धर्मः अर्थात् तत्र विद्यमानो यो धर्मः सः सामान्यरूपेण प्रतियोगितावच्छेदकधर्मो भवति। अन्यूनानतिप्रसक्तधर्मः अवच्छेदको भवति। घट इत्युक्ते भासमानधर्मो घटत्वम् इति अवच्छेदकधर्मो भवति। घटः अर्थाद् घटत्ववान्। घटत्वमेव घटस्य अवच्छेदको धर्मः। घटत्वावच्छिन्नप्रतियोगिता भवति। एवं 'रूपवान् घटः'

इत्यत्र रूपं प्रकारो भवति। प्रकारे प्रकारता वर्तते। रूपं विशेषणम्, विशेषणे विशेषणता वर्तते। सा प्रकारता विशेषणता च केनचिद् धर्मेण केनचिद् सम्बन्धेन च अवच्छिन्ना भवति। विशेष्ये विशेष्यता वर्तते। सा विशेष्यता केनचिद् धर्मेण अवच्छिन्ना भवति। घटत्वावच्छिन्ना विशेष्यता भवति। रूपत्वावच्छिन्ना प्रकारता विशेषणता वा भवति। यो धर्मः यस्य अवच्छेदकः स तद्धर्मावच्छिन्नो भवति। घटत्वावच्छिन्ना प्रतियोगिता भवति। घटत्वावच्छिन्नो घटो न भवति। अत एव प्रतियोगिताया विशेषणद्वयं भवति – घटनिष्ठा प्रतियोगिता, घटत्वावच्छिन्ना प्रतियोगिता च। अत एव घटाभाव इत्यस्य शाब्दबोध एवं भवति – घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभावः। घटत्वावच्छिन्नप्रतियोगिता घटनिष्ठप्रतियोगिता। प्रतियोगितायाः विशेषणद्वयं भवति। भूतले घटो नास्ति, घटाभाववद् भूतलम् वा यदा उच्यते, तदा शाब्दबोधो भवति - घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभाववद् भूतलम्। प्रतियोगिताया अवच्छेदको धर्मो भवति, सम्बन्धोऽपि भवति। यथा प्रकारताया अवच्छेदकसम्बन्धो भवति, विशेष्यताया अवच्छेदकसम्बन्धः कोऽपि न भवति। अत एव घटाभावीयप्रतियोगिताया अवच्छेदकसम्बन्धः को भवति? आदौ उदाहरणरूपेण कतिपयवाक्यानि उच्यन्ते – घटाभावः= घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभावः। रूपाभावः= रूपत्वावच्छिन्नरूपनिष्ठप्रतियोगिताकाभावः। अत्र प्रतियोगी रूपम्। प्रतियोगिता=रूपनिष्ठा। प्रतियोगिताया अवच्छेदकधर्मो रूपत्वम्। रूपत्वावच्छिन्ना प्रतियोगिता भवति। एवं रसाभाव इत्यत्र प्रतियोगी रसः। प्रतियोगिता रसनिष्ठा। प्रतियोगितावच्छेदकं रसत्वम्। अत एव 'रसाभावः' इत्यस्य शाब्दबोध एवं भवति – रसत्वावच्छिन्नरसनिष्ठप्रतियोगिताकाभावः। एवं रूपेण अभावघटितानां वाक्यानां सर्वत्र शाब्दबोध उह्यो भवति। घटत्वम्, रूपत्वम्, रसत्वम् इत्यादीनि च प्रतियोगितावच्छेदकानि भवन्ति। अधुना जिज्ञासा जायते, आसां प्रतियोगितानाम् अवच्छेदकसम्बन्धाः के भवन्ति? तत्र एको नियमो वर्तते - 'येन सम्बन्धेन यन्नास्ति इति उच्यते, स सम्बन्धः प्रतियोगितावच्छेदकः सम्बन्धो भवति।' प्रकारः विशेष्ये येन सम्बन्धेन वर्तते, स सम्बन्धः प्रकारतावच्छेदकसम्बन्धः। कार्यकारणभावविषये नियमो वर्तते – ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभावः। कार्यकारणयोर्मध्ये सामानाधिकरण्यं वर्तते। कार्यकारणयोः ऐकाधिकरण्यम् अवश्यं भवितुमर्हति। तस्मिन्नेव अधिकरणे येन सम्बन्धेन कार्यं वर्तते, स एव कार्यतावच्छेदकसम्बन्धः, तस्मिन्नेव अधिकरणे येन सम्बन्धेन कारणं वर्तते, स एव कारणतावच्छेदकसम्बन्धः। अधुना जिज्ञासा जायते, अभावस्य प्रतियोगितावच्छेदकसम्बन्धः को भवति? तत्र उच्यते–'येन सम्बन्धेन यन्नास्ति इति उच्यते, स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः।' अत्र प्रतियोगितावच्छेदकसम्बन्धः को भवति इति वक्तुः अभिप्रेतो भवति। यथा – घटाभाववद् भूतलम् इति यदि वक्त्रा उच्यते, तत्र जिज्ञासा जायते केन सम्बन्धेन भूतले घटो नास्ति इति? अत्र भूतले संयोगसम्बन्धेन घटो नास्ति, भूतले समवायसम्बन्धेन घटो नास्ति, भूतले स्वरूपसम्बन्धेन घटो नास्ति, भूतले कालिकसम्बन्धेन घटो नास्ति। येन केनापि सम्बन्धेन अभावः भवितुमर्हति। यः कोऽपि सम्बन्धो वक्तुर्विवक्षाविषयो भवति। तत्र जिज्ञासा वर्तते, भूतले घटस्य अभावः केन सम्बन्धेन भवति? वक्तुर्विवक्षाधीनः सम्बन्धो भवति। अत एव येन सम्बन्धेन यन्नास्ति इति उच्यते, स सम्बन्ध एव प्रतियोगितावच्छेदकसम्बन्धः। वक्त्रा यदि भूतले संयोगसम्बन्धेन घटो नास्ति इति उच्यते। अत एव तर्हि तत्र प्रतियोगितावच्छेदकसम्बन्धो भवति संयोगः। यदि वक्त्रा भूतले समवायसम्बन्धेन घटो नास्ति इत्युच्यते तर्हि तत्र प्रतियोगितावच्छेकसम्बन्धो भवति समवायः। अत एव नियम उच्यते –'येन सम्बन्धेन यन्नास्ति इति उच्यते स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः।' किन्तु यत्र सम्बन्धस्य उल्लेखो नास्ति तत्र कः सम्बन्धो प्रतियोगितावच्छेदकसम्बन्धो भवति? तत्र सामान्यरूपेण किं भवति? तत्र विचारः करणीयः। घटाभाववद् भूतलम्, घटो भूतले नास्ति इत्यत्र, घटो द्रव्यम्, भूतलमपि द्रव्यम्। अत एव सामान्यतो द्रव्ययोः सम्बन्धो भवति संयोगः। भूतले

यदि घटस्तिष्ठति तर्हि घटः संयोगसम्बन्धेन तिष्ठति। अत एव घटस्य निषेधोऽपि संयोगसम्बन्धेन भवति। एवं वायौ रूपं नास्ति, इत्यत्र रूपं खलु गुणः, वायुस्तावद् द्रव्यम्। अत एव एतयोः सम्बन्धः समवायः, गुणगुणिनोः सम्बन्धः समवाय एव। अत एव रूपाभावोऽपि समवायसम्बन्धेन वायौ तिष्ठति। तथापि अयं नियमः अवधेयो भवति, येन सम्बन्धेन वक्ता निषेधं करोति, स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः।अत एव भूतले संयोगसम्बन्धेन घटो नास्ति इति भवति। अत एव घटनिष्ठा प्रतियोगिता घटत्वावच्छिन्ना भवति, संयोगसम्बन्धावच्छिन्ना च भवति। यथा घटत्वं प्रतियोगिताया अवच्छेदकं भवति, तथैव संयोगसम्बन्धोऽपि प्रतियोगिताया अवच्छेदकसम्बन्धो भवति। घटत्वावच्छिन्ना प्रतियोगिता भवति। संयोगसम्बन्धावच्छिन्ना प्रतियोगिता च भवति। अत एव प्रतियोगितायाः त्रिविधं विशेषणं भवति – संयोगसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठ-प्रतियोगिताकः अभावः। संयोगसम्बन्धावच्छिन्ना प्रतियोगिता, घटत्वावच्छिन्ना प्रतियोगिता, घटनिष्ठप्रतियोगिता इति। अत एव घटाभाववद् भूतलम् इत्युक्ते संयोगसम्बन्धावच्छिन्न-घटत्वधर्मावच्छिन्न-घटनिष्ठप्रतियोगिताकाभाववद् भूतलम् इत्याकारकः शाब्दबोधो भवति।

अधुना अन्योन्याभावघटितवाक्यानां शाब्दबोधविषये आलोचना क्रियते। घटो नः पटः अथवा घटभेदवान् पटः। भूतले घटो नास्ति इति अत्यन्ताभावस्य उदाहरणम्। घटो न पटः इति अन्योन्याभावस्य उदाहरणम्। अत्रापि यस्याभावः स प्रतियोगी, अत एव अत्र घटः प्रतियोगी। प्रतियोगिनि प्रतियोगिता वर्तते। अत एव अन्योन्याभावीय- प्रतियोगिता अपि प्रतियोगिनि घटे वर्तते। अस्याः प्रतियोगितायाः निरूपकः को भवति? तत्र उच्यते, स निरूपकभेदरूपाभावः। अत एव घटभेद इत्यस्य अर्थो भवति घटनिष्ठप्रतियोगिताको भेदः। घटभेदवान् पटः इत्यस्य अर्थो भवति घटनिष्ठप्रतियोगिताकभेदवान् पटः। घटनिष्ठप्रतियोगिताकभेदाधिकरणः पटः अथवा घटनिष्ठप्रतियोगिताकभेदाश्रयः पटः। अत्र पुनः जिज्ञासा जायते, अस्या घटभेदीय(अर्थात् घटान्योन्याभावीय)-प्रतियोगिताया अवच्छेदकः को भवति? तत्र उच्यते घटत्वमेव अस्याः प्रतियोगिताया अवच्छेदकं भवति। अत एव घटत्वावच्छिन्ना प्रतियोगिता भवति। यो यस्य अवच्छेदको भवति, तेन स अवच्छिन्नो भवति। अत एव घटभेद इत्यत्र घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताको भेद इति बोधो भवति।

एवं 'रूपभेदः' इत्यत्र रूपत्वावच्छिन्नरूपनिष्ठप्रतियोगिताको भेदः। 'रसभेदः' इत्यत्र रसत्वावच्छिन्नरसनिष्ठप्रतियोगिताकभेद इति बोधो भवति। अधुना 'घटभेदः' इत्यत्र प्रतियोगितायाः सम्बन्धः को भवति इति निरूप्यते। पूर्वं यद् उक्तम् – येन सम्बन्धेन यन्नास्ति इत्युच्यते सः सम्बन्धः प्रतियोगितावच्छेदकसम्बन्ध इति नियमः अत्र न प्रवर्तते, अत्र घटो न पटः= घटभेदवान् पट इति उच्यते अर्थाद् अत्र 'नञ्' इत्यस्य प्रयोगो वर्तते, 'भेदः' इति पदस्य प्रयोगो वर्तते, न पुनः 'नास्ति' इति पदस्य। 'नास्ति' इति पदस्य प्रयोगः अत्यन्ताभावघटकवाक्ये एव भवति, न पुनः अन्योन्याभावघटकवाक्ये। अन्योन्याभावघटकवाक्ये केवलम् 'नञ्' इत्यस्य 'भेदः' इत्यस्य च प्रयोगो भवति। अत एव उक्तो न्यायोऽत्र न प्रवर्तते। घटो नास्ति इति घटात्यन्ताभावः। पटो नास्ति इत्यत्र पटात्यन्ताभावः। घटो न पटः इत्यत्र घटान्योन्याभावः, अर्थाद् घटभेदो भवति। अन्योन्याभावस्थले प्रतियोगितावच्छेदकसम्बन्धः सर्वदा तादात्म्यसम्बन्ध एव भवति। अन्योन्याभावीयप्रतियोगितावच्छेदकसम्बन्धः तादात्म्यसम्बन्धः एव भवति, नान्यः। अत एव अन्योन्याभावस्य लक्षणं *तर्कसंग्रह*ग्रन्थे उक्तम् – 'तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः अन्योन्याभावः।'[४] यस्य अभावस्य प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना भवति, सः अभावः अन्योन्याभावः। तादात्म्यसम्बन्धाद् भिन्नः कोऽपि

सम्बन्धः(संयोगसमवायादिः) यदि प्रतियोगिताया अवच्छेदकसम्बन्धो भवति, तदा तत्र अत्यन्ताभावो भवति। 'तादात्म्यसम्बन्धातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकः अभावः अत्यन्ताभावः' इति अत्यन्ताभावस्य लक्षणम्। यस्य अभावस्य प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना भवति, सः अभावः अन्योन्याभावः। यस्य अभावस्य प्रतियोगिता तादात्म्यसम्बन्धातिरिक्तसंयोगसमवायादिसम्बन्धावच्छिन्ना भवति, स अभावः अत्यन्ताभावः। अन्योन्याभावस्थले प्रतियोगिता सर्वदा तादात्म्यसम्बन्धावच्छिन्ना एव भवति। अत एव घटनिष्ठा या प्रतियोगिता, सा प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना भवति। अत एव घटो न पटः (=घटभेदवान् पटः) इति वाक्यस्य शाब्दबोध एवं भवति – तादात्म्यसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठप्रतियोगिताकभेदवान् पटः। एवं रूपभेदः इत्यत्र तादात्म्यसम्बन्धावच्छिन्न-रूपत्वावच्छिन्न-रूपनिष्ठप्रतियोगिताकभेदः। 'रूपभेदवान् रसः' इत्यत्र तादात्म्यसम्बन्धावच्छिन्न-रूपत्वावच्छिन्न-रूपनिष्ठप्रतियोगिताकभेदवान् रसः। रसो न रूपम्(=रसभेदवद् रूपम्) इति वाक्यस्य शाब्दबोधो भवति – तादात्म्यसम्बन्धावच्छिन्न-रसत्वावच्छिन्न-रसनिष्ठप्रतियोगिताकभेदवद् रूपम्।

वह्निमान् न ह्रदः=वह्निमद्भेदवान् ह्रदः=वह्निमद्भिन्नो ह्रदः - इत्यपि अन्योन्याभावस्य उदाहरणम्। वह्निमतो भेदः अत्र प्रदर्श्यते। घटो न पट इत्यत्र घटभेदो गृहीतः। 'वह्निमद्भेदः' इत्यत्र यस्याभावः स प्रतियोगी। अत एव वह्निमद् अत्र प्रतियोगी। प्रतियोगिनि प्रतियोगिता वर्तते। अत एव प्रतियोगिता वह्निमन्निष्ठा भवति। तादृशप्रतियोगितायाः निरूपकः अन्योन्याभावो भवति। अतएव 'वह्निमद्भेदः' इत्यस्य शाब्दबोधो भवति, वह्निमन्निष्ठप्रतियोगिताकभेदः। वह्निमन्निष्ठा या प्रतियोगिता, तस्याः निरूपकभेदः। अत एव शाब्दबोधो भवति – वह्निमन्निष्ठप्रतियोगिताकभेदः। प्रतियोगिताया अवच्छेदकधर्मः को भवति? तदत्र निरूप्यते– वह्निमति भासमानो धर्म एव अवच्छेदको भवति। अत एव वह्निमत्त्वम् एव प्रतियोगिताया अवच्छेदकधर्मो भवति। अत एव वह्निमत्त्वावच्छिन्ना प्रतियोगिता भवति। वह्निमन्निष्ठप्रतियोगितावच्छेदकं वह्निमत्त्वम्। वह्निमन्निष्ठा प्रतियोगिता वह्निमत्त्वावच्छिन्ना भवति। प्रतियोगिताया विशेषणद्वयं भवति। वह्निमन्निष्ठा प्रतियोगिता, वह्निमत्त्वावच्छिन्ना प्रतियोगिता च। अत एव 'वह्निमान् न ह्रदः' इति वाक्यस्य शाब्दबोधो भवति – वह्निमत्त्वावच्छिन्नवह्निमन्निष्ठप्रतियोगिताकभेदवान् ह्रदः। अधुना प्रतियोगितायाः सम्बन्धो निरूप्यते। नियमो वर्तते – अन्योन्याभावीयप्रतियोगितावच्छेदकसम्बन्धः तादात्म्यसम्बन्ध एव। अत एव 'वह्निमान् न ह्रदः' (='वह्निमद्भेदवान् ह्रदः') इति वाक्यस्य शाब्दबोधो भवति - तादात्म्यसम्बन्धावच्छिन्नवह्निमत्त्वावच्छिन्न-वह्निमन्निष्ठप्रतियोगिताकभेदवान् (=भेदाधिकरणम्) ह्रद इति। 'घटाभावः' इति वाक्यस्य शाब्दबोधो भवति – 'घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभावः।' अत्र घटत्वावच्छिन्ना इति प्रतियोगिताया विशेषणं भवति। घटत्वावच्छिन्नः= घटत्वनिष्ठः= अवच्छेदकतानिरूपितः। कथं समार्थको भवति? प्रतियोगिता कुत्र वर्तते, प्रतियोगिनि घटे वर्तते। प्रतियोगिताया अवच्छेदकं भवति घटत्वम्। अवच्छेदकता घटत्वे वर्तते। प्रतियोगितावच्छेदकता घटत्वे वर्तते। घटे प्रतियोगिता वर्तते, अत एव अवच्छेदके घटत्वे प्रतियोगितावच्छेदकता वर्तते। प्रतियोगिताया अवच्छेदकतायाश्च मध्ये परस्परं निरूप्यनिरूपकभावसम्बन्धो वर्तते। यथा प्रकारतानिरूपिता विशेष्यता, विशेष्यतानिरूपिता प्रकारता, आधेयतानिरूपिता अधिकरणता, अधिकरणतानिरूपिता आधेयता, कार्यतानिरूपिता कारणता, कारणतानिरूपिता कार्यता भवति। अत एव प्रतियोगिता-अवच्छेदकतयोर्मध्ये परस्परं निरूप्यनिरूपकभावसम्बन्धो वर्तते। प्रतियोगितानिरूपिता अवच्छेदकता, अवच्छेदकतानिरूपिता प्रतियोगिता भवति। 'घटाभावः' इत्यस्य शाब्दबोधो भवति – घटत्वनिष्ठ-अवच्छेदकतानिरूपित-घटनिष्ठ-प्रतियोगिताकाभावः। यथा घटाभावः= घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभावः।

तद्वत् घटत्वनिष्ठ-अवच्छेदकता-निरूपित-घटनिष्ठप्रतियोगिताकाभावोऽपि वक्तुं शक्यते। अवच्छिन्नः = अवच्छेदकतानिरूपितः।

'वह्निमान् न ह्रदः/वह्निमद्भेदवान् ह्रदः' अत्र वह्निमतो भेदः वर्तते। यस्याभावः सः प्रतियोगी। अत एव अत्र वह्निमद् इति प्रतियोगी। प्रतियोगिनि प्रतियोगिता वर्तते। अत एव प्रतियोगी वह्निमन्निष्ठः। अत्र प्रतियोगिताया अवच्छेदकम् वह्निमत्त्वम्। अत एव वह्निमत्त्वावच्छिन्ना प्रतियोगिता भवति। 'वह्निमद्भेदः' इत्यस्य शाब्दबोधो भवति– वह्निमत्त्वावच्छिन्न-वह्निमन्निष्ठ-प्रतियोगिताकभेदः। अधुना 'वह्निमत्त्वावच्छिन्न' इत्यस्य अर्थो निरूप्यते। वह्निमत्त्वावच्छिन्न इत्यस्य अर्थस्तावत् 'वह्निमत्त्वनिष्ठ-अवच्छेदकतानिरूपितः' इति भवति। इत्यर्थः कथमायाति? पूर्ववदुच्यते- अत्र प्रतियोगिता वह्निमन्निष्ठा इति। प्रतियोगिताया अवच्छेदकं भवति वह्निमत्त्वम्। अत एव अवच्छेदके वह्निमत्त्वे वर्तते अवच्छेदकता अर्थात् प्रतियोगितावच्छेदकता। अवच्छेदकतानिरूपिता प्रतियोगिता, प्रतियोगितानिरूपिता अवच्छेदकता। अत एव अनयोर्मध्ये निरूप्यनिरूपकभावसम्बन्धो वर्तते। अतः 'वह्निमद्भेदः' इत्यस्य शाब्दबोधो भवति – वह्निमत्त्वनिष्ठ-अवच्छेदकतानिरूपित-वह्निमन्निष्ठ-प्रतियोगिताकभेदः। अर्थात् तादात्म्यसम्बन्धावच्छिन्न-वह्निमत्त्वनिष्ठ-अवच्छेदकतानिरूपित-वह्निमन्निष्ठ-प्रतियोगिताकभेदः, तादात्म्यसम्बन्धा-वच्छिन्न-वह्निमत्त्वावच्छिन-वह्निमन्निष्ठ-प्रतियोगिताकभेद इत्यपि भवति।

अत्र पुनरेको नियमो वर्तते– 'मतुबन्ताद्विहितो भावप्रत्ययः प्रकृत्यर्थं गमयति।' यथा- वह्निमत्त्वम्। वह्निः अस्मिन् अस्ति इति व्युत्पत्त्या 'तदस्यास्त्यस्मिन्निति मतुप्'[5] इति पाणिनीयसूत्रेण वह्निशब्दात् मतुप्-प्रत्यये, अनुबन्धलोपे 'वह्निमत्' इति भवति। ततः 'वह्निमतो भावः' इति व्युत्पत्त्या 'गुणवचनब्राह्मणादिभ्यः कर्मणि च'[6]इति पाणिनीयसूत्रेण भावार्थे 'त्व'प्रत्यये 'वह्निमत्त्वम्' इति पदं सिद्धं भवति। अत्र मतुपः अर्थो नास्ति, भाव'त्व'प्रत्ययस्य अपि अर्थो नास्ति। केवलं वह्निशब्दस्य अर्थः अत्र गृहीतो भवति। वह्निमत्त्वम् अर्थात् वह्निरेव, रसवत्त्वम् अर्थात् रस एव। वह्निमत्त्वम् = वह्निः। रसवत्त्वम् = रसः। तेन वह्निमत्त्वनिष्ठ-अवच्छेदकता-निरूपित-वह्निमन्निष्ठ-प्रतियोगिताकभेद इत्यत्र वह्निनिष्ठ-अवच्छेदकता-निरूपित-वह्निमन्निष्ठ-प्रतियोगिताकभेद इत्यपि वक्तुं शक्यते। अत्र अवच्छेदकता किंनिष्ठा? वह्निमत्त्वनिष्ठा। वह्निमत्त्वम् = वह्निः। अत एव वह्निमत्त्वनिष्ठा = वह्निनिष्ठा भवति। वह्निमत्त्वं प्रतियोगितावच्छेदकम्, वह्निरपि प्रतियोगितावच्छेदको भवति। अत एव 'वह्निमान् न ह्रदः/ वह्निमद्भेदवान् ह्रदः' इत्यस्य शाब्दबोधो भवति– वह्निनिष्ठ-अवच्छेदकता-निरूपित-वह्निमन्निष्ठ-प्रतियोगिताकभेदवान् ह्रदः।

पुनः अस्य शाब्दबोधघटितवाक्यस्य विश्लेषणं क्रियते –अत्र कः शब्दः कस्य विशेषणं भवति? अत्र 'प्रतियोगिता' इति विशेष्यपदम्। वह्निमत्त्वनिष्ठा प्रतियोगिता। अवच्छेदकता वह्निमत्त्वे वर्तते। प्रतियोगिताया अवच्छेदकसम्बन्धः अत्र तादात्म्यसम्बन्धो भवति। अपरः सम्बन्धो न भवितुमर्हति। अवच्छेदके वह्निमत्त्वे (= वह्नौ) अवच्छेदकता वर्तते। पुनरत्र जिज्ञासा जायते - प्रतियोगितावच्छेदकताया अवच्छेदकसम्बन्धः को भवति? प्रतियोगिता वह्निमन्निष्ठा भवति। एवञ्च प्रतियोगिताया अवच्छेदकता वह्निनिष्ठा भवति, प्रतियोगिताया अवच्छेदकं वह्निमत्त्वम् इति कारणात्। वह्निनिष्ठा या प्रतियोगितावच्छेदकता अस्ति, तादृशावच्छेदकताया अवच्छेदकसम्बन्धः को भवति? यथा प्रतियोगिताया अवच्छेदकसम्बन्धो भवति, प्रकारताया अवच्छेदकसम्बन्धो भवति, कार्यताया अवच्छेदकसम्बन्धो भवति, तद्वद् अत्रापि अवच्छेदकताया अवच्छेदकसम्बन्धः को भवति इत्यस्ति जिज्ञासा। प्रतियोगितावच्छेदकतायाः, प्रकारतावच्छेदकताया आधेयतावच्छेदकतायाः अपि अवच्छेदकसम्बन्धो भवति, तद्वद् अत्रापि अवच्छेदकताया अवच्छेदकसम्बन्धः को भवति? प्रतियोगितावच्छेदकताया अवच्छेदकसम्बन्धः को भवति? अत्र नियमो वर्तते –

वह्निनिष्ठा या अवच्छेदकता अस्ति, तादृशावच्छेदकताया अवच्छेदकसम्बन्धः को भवति? अत्र नियमस्य आकारः खलु – प्रतियोगितावच्छेदकं येन सम्बन्धेन प्रतियोगिनि तिष्ठति, स सम्बन्धः प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धो भवति। अत्र प्रतियोगितावच्छेदकस्य अवच्छेदक इति न, अपि तु प्रतियोगितावच्छेदकताया अवच्छेदक इति वक्तव्यम्। अत्र प्रतियोगी अस्ति – वह्निमत्, प्रतियोगिता वह्निमति विद्यते, प्रतियोगितावच्छेदकं वह्निमत्त्वं भवति। वह्निमत्त्वम् = वह्निः, अतः प्रतियोगितावच्छेदको भवति वह्निः इति। वह्निमत्त्वं वह्निर्वा वह्निमति वर्तते। अधुना जिज्ञासा जायते यद्, वह्निः वह्निमति (पर्वतादौ) केन सम्बन्धेन वर्तते? वह्निमान् = पर्वतः। ह्रदो न वह्निमान् भवति। 'वह्निमान्' इत्यनेन गोष्ठादेर्ग्रहणम् अपि भवति। पर्वते वह्नेः सम्बन्धः को भवति? संयोगसम्बन्धो भवति, संयोगसम्बन्धेन वह्निः पर्वते विद्यते, युतसिद्धत्वात्। अत्र प्रतियोगी भवति वह्निमत्, प्रतियोगितावच्छेदकं भवति वह्निमत्त्वम् (=वह्निः)। अधुना प्रतियोगितावच्छेदकं येन सम्बन्धेन प्रतियोगिनि वर्तते सः एव सम्बन्धः प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धः, अस्मिन् उदाहरणे प्रतियोगितावच्छेदकं (वह्निः) प्रतियोगिनि (वह्निमति) संयोगसम्बन्धेन एव तिष्ठति, अतः प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धो भवति संयोगसम्बन्ध इति। अन्योन्याभावीयप्रतियोगितायाः अवच्छेदकसम्बन्धो भवति तादात्म्यसम्बन्धः, परन्तु प्रतियोगितावच्छेदकताया अवच्छेदकसम्बन्धो भवति संयोगसम्बन्ध इति, किन्निष्ठा प्रतियोगितावच्छेदकता? वह्निनिष्ठा अवच्छेदकता इति। वह्निनिष्ठा या अवच्छेदकता, तादृशावच्छेदकताया अवच्छेदकसम्बन्धो भवति संयोगसम्बन्ध इति। इयम् अवच्छेदकता संयोगसम्बन्धेन अवच्छिन्ना भवति। यथा वह्निमन्निष्ठप्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना भवति। तथैव वह्निनिष्ठावच्छेदकता संयोगसम्बन्धावच्छिन्ना भवति। अतः वह्निमद्भेद इत्यस्य शाब्दबोध एवं भवति - संयोगसम्बन्धावच्छिन्नवह्निनिष्ठ-अवच्छेदकतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न-वह्निमन्निष्ठ-प्रतियोगिताकभेद इति। वह्निमान् न ह्रदः/ वह्निमद्भेदवान् ह्रदः/ वह्निमद्भिन्नो ह्रद इत्यस्य शाब्दबोध एवं भवति – संयोगसम्बन्धावच्छिन्न-वह्निनिष्ठ-अवच्छेदकता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-वह्निमन्निष्ठ-प्रतियोगिताकभेदवान् ह्रद इति। अस्य वाक्यस्य विशेष्य-विशेषणात्मकं विश्लेषणम् अधुना क्रियते, अस्मिन् शाब्दबोधे अवच्छेदकता वह्निनिष्ठा भवति, अपि च संयोगसम्बन्धावच्छिन्ना भवति। अतः अवच्छेदकतापदे विशेषणद्वयमस्ति। प्रतियोगिता इति पदे विशेषणत्रयं वर्तते। प्रथमविशेषणं भवति वह्निमन्निष्ठा प्रतियोगिता, द्वितीयं खलु तादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता, तृतीयं खलु वह्निमत्त्वावच्छिन्ना प्रतियोगिता। 'वह्निमत्त्वावच्छिन्ना प्रतियोगिता' इत्यस्य परिस्कृतोऽर्थः – 'संयोगसम्बन्धावच्छिन्न-वह्निनिष्ठ-अवच्छेदकता-निरूपिता' इति। प्रतियोगिता अवच्छेदकतया निरूपिता अस्ति। कीदृशी अवच्छेदकता? वह्निनिष्ठ-अवच्छेदकता, या खलु संयोगसम्बन्धावच्छिन्ना प्रतियोगिता। संयोगसम्बन्धावच्छिन्नवह्निनिष्ठ-अवच्छेदकतया निरूपिता इत्यस्ति प्रतियोगितायाः विशेषणम्।

अधुना विचार्यते – अवच्छेदकता किन्निष्ठा, वह्निनिष्ठा। अवच्छेदकता इत्युक्ते प्रतियोगितावच्छेदकता। वह्निनिष्ठा अवच्छेदकता वह्नौ एव तिष्ठति। अवच्छेदकता यस्मिन् वह्नौ अस्ति, तस्मिन् वह्नौ भासमानधर्मरूपेण वह्नित्वमपि विद्यते। एतद् वह्नित्वम् अवच्छेदकताया अवच्छेदको भवति। अवच्छेदकताया अवच्छेदकः यथा सम्बन्धो भवति, तथैव धर्मोऽपि भवितुमर्हति। वह्निनिष्ठप्रतियोगितावच्छेदकताया अवच्छेदको भवति वह्नित्वमिति। वह्नित्वम् अवच्छेदकताया अवच्छेदकम् अर्थाद् अवच्छेदकता वह्नित्वेन अवच्छिन्ना (वह्नित्वावच्छिन्ना) भवति। यथा प्रतियोगिताया अवच्छेदकं घटत्वं भवति, घटत्वावच्छिन्ना प्रतियोगिता अपि भवति, तथैव अत्र प्रतियोगिताया अवच्छेदकं वह्निमत्त्वमिति, वह्निनिष्ठा या अवच्छेदकता, तादृशावच्छेदकताया अवच्छेदकं भवति वह्नित्वम्। अतः

वह्नित्वावच्छिन्ना अवच्छेदकता भवति इति फलितार्थः। वह्नित्वावच्छिन्ना प्रतियोगिता इति भवति। अतः अवच्छेदकतायाः विशेषणरूपेण नूतनं विशेषणमायाति, तत् विशेषणं खलु 'वह्नित्वावच्छिन्ना' इति। तर्हि शाब्दबोधस्य आकारो भवति – संयोगसम्बन्धावच्छिन्न-वह्नित्वावच्छिन्न-वह्निनिष्ठ-अवच्छेदकता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-वह्निमन्निष्ठ-प्रतियोगिताकभेदवान् ह्रद इति।

अवच्छेदके विशेषणीभूतो धर्मः अवच्छेदकतायाः अवच्छेदको भवति। अवच्छेदके विशेषणीभूतो धर्मः येन सम्बन्धेन तिष्ठति, स सम्बन्धः अवच्छेदकतावच्छेदकसम्बन्धो भवति। यथा – 'मठे दण्डी नास्ति', इत्यत्र दण्डः अस्य अस्ति इति दण्डी= पुरुषः। यस्तिष्ठति सः प्रतियोगी। यस्मिन् तिष्ठति सः अनुयोगी। अत एव प्रतियोगिनि दण्डिनि विशेषणतया उपस्थितो दण्डः दण्डिगतप्रतियोगिताया अवच्छेदकः, दण्डश्च दण्डिनि संयोगसम्बन्धेन तिष्ठति। दण्डी च संयोगसम्बन्धेन मठे तिष्ठति। अतः यदि एवमुच्यते यत्, मठे दण्डी नास्ति, तर्हि तत्र प्रतियोगितावच्छेदकसम्बन्धो भवति संयोगः। कारणं खलु 'येन सम्बन्धेन यन्नास्ति' स सम्बन्ध एव प्रतियोगितावच्छेदकसम्बन्धः, एतत् तु पूर्वमुक्तम्। अतः वक्त्रा यदि उच्यते, मठे संयोगसम्बन्धेन दण्डी नास्ति। तर्हि तत्र प्रतियोगितावच्छेदकसम्बन्धो भवति संयोग एव। परन्तु वक्ता यदि सम्बन्धस्य उल्लेखम् एव न करोति, तर्हि किं भवति, इति प्रसङ्गे पूर्वमुक्तम्। मठे दण्डी नास्ति अर्थात् दण्ड्यभाववान् मठः। मठः खलु द्रव्यम्, दण्डी अस्ति पुरुषविशेषः । अतः सोऽपि द्रव्यम्। अवयवावयविनोः सम्बन्धं विना द्रव्ययोः सम्बन्धः संयोग एव भवति। एवञ्च मठे तस्य दण्डिनः निषेधोऽपि संयोगसम्बन्धेन एव भवति। अतः मठे संयोगसम्बन्धेन एव दण्डी नास्ति। एवञ्च दण्डिनिष्ठप्रतियोगितापि दण्डत्वावच्छिन्ना भवति, संयोगसम्बन्धावच्छिन्ना च भवति। यथा दण्डित्वं प्रतियोगितायाः अवच्छेदकधर्मो भवति, तथा संयोगसम्बन्धोऽपि प्रतियोगिताया अवच्छेदकसम्बन्धो भवति। प्रसङ्गतः अत्र उल्लेख्यं यत् दण्डित्वं दण्डश्च समार्थकमेव, प्रकृतिजन्यबोधे प्रकारीभूतधर्मभावप्रत्ययार्थः इति नियमात्। दण्डशब्दात् मत्वर्थीय-इनिप्रत्यये दण्डिन् इति शब्दस्य निष्पत्तिर्भवति। तस्मात् भावार्थे त्वप्रत्ययेन 'दण्डित्वम्' इति पदं भवति। अर्थात् दण्डित्वम् दण्डः एक एव अर्थात् मठः दण्ड्यभाववान् इति वाक्यस्य शाब्दबोधो भवति - संयोगसम्बन्धावच्छिन्न-दण्डित्वधर्मावच्छिन्न-दण्डिनिष्ठप्रतियोगिताकाभाववान् मठ इति।

अधुना रक्तदण्डवान् मठः इत्यस्मिन् स्थले रक्तरूपं समवायसम्बन्धेन एव दण्डे अस्ति। एवं सः रक्तदण्डः संयोगसम्बन्धेन पुरुषे अस्ति। एवं सः पुरुषः संयोगसम्बन्धेन एव मठे तिष्ठति। रक्तरूपं खलु गुणः। अतः सः गुणः समवायसम्बन्धेन एव दण्डे तिष्ठति गुणगुणिनोः समवायसम्बन्धत्वात्। एवं दण्डः एकं द्रव्यम्, अतः तद् द्रव्यं पुरुषरूपे द्रव्ये संयोगसम्बन्धेन एव तिष्ठति, एवं सः रक्तदण्डवान् पुरुषः संयोगसम्बन्धेन एव मठे अस्ति। अधुना रक्तदण्डविशिष्टपुरुषाभाववान् मठः इत्यस्य वाक्यस्य शाब्दवोधस्य आकार एवं भवति - समवायसम्बन्धावच्छिन्न-रक्तत्वावच्छिन्नरक्तनिष्ठसंयोगसम्बन्धावच्छिन्न-दण्डित्वधर्मावच्छिन्न-दण्डिनिष्ठप्रतियोगिताकाभाववान् मठः इति। भावाभावपदार्थयोमर्ध्ये प्रतियोगिताकत्वसम्बन्धः वर्तते।

**संकेतपञ्जिः**

त. स. = *तर्कसंग्रहः*

दि. क.= *दिनकरीटीका*

न्या. सि. मु. = *न्यायसिद्धान्तमुक्तावली*

पा. सू. = *पाणिनीयसूत्रम्*

पृ. = पृष्ठाङ्कः

भा. प. = *भाषापरिच्छेदः*,

स. प. = *सप्तपदार्थी*

सम्पा. = सम्पादकः

**उल्लेखपञ्जिः**

१. स. प., पृ.-२५।

२. न्या. सि. मु., भा. प., सम्पा. पञ्चाननभट्टाचार्य्यः, पृ.-७८।

३. दि. क., भा. प., पृ.-७०।

४. त. सं., पृ.-१७२।

५. पा. सू. ५/२/९४।

६. *तदेव* ५/१/१२४।

**परिशीलितग्रन्थपञ्जिः**

अन्नंभट्टः। *तर्कसंग्रहः*। सम्पा. श्रीकृष्णवल्लभाचार्यः। *न्यायबोधिनी-पदकृत्य-दीपिका-किरणावली*व्याख्योपेतः। वाराणसी: चौखम्बा संस्कृत सीरीज आफिस, २०१७।

गङ्गेशोपाध्यायः। *तत्त्वचिन्तामणिः*। सम्पा. कामाख्यानाथतर्कवागीशः। अनुमानखण्डम्, श्रीमथुरानाथतर्कवागीशकृत-*रहस्य*नामटीकासहितम्, द्वितीयो भागः प्रथमः परिच्छेदः। दिल्लीः चौखम्बा संस्कृत प्रतिष्ठान, २०१०। (व्रजजीवन प्राच्यभारती ग्रन्थमाला ४७)।

गौतमः। *न्यायसूत्रम्* (प्रथमखण्ड:) । सम्पा. फणिभूषणतर्कवागीश:। कलकाता: पश्चिमवङ्ग राज्य पुस्तक पर्षत्, २०१८ (षष्ठसंस्करणम्)।

पाणिनिः। *अष्टाध्यायी*। सम्पा. गोपालदत्तपाण्डेयः। वाराणसी: चौखम्बा सुरभारती प्रकाशन, २०१७। (चौखम्बा सुरभारती ग्रन्थमाला १९)।

*भारतीय दर्शन कोष*(१)। सम्पा. भट्टाचार्य एवं भट्टाचार्य। कलकाता: संस्कृत कलेज, १३८३ (वङ्गाव्दः)।

न्यायरत्नः, महेशचन्द्रः। *नव्यन्यायभाषाप्रदीपः*। सम्पा. कालीपदतर्काचार्यः। कलकाता: संस्कृत कलेज, १९५६। (कलिकाता संस्कृतमहाविद्यालय-गवेषणाग्रन्थमाला – ग्रन्थाङ्कः ७९)।

महापात्रः, विष्णुपदः। *न्यायपारिभाषिकशब्दावली*। संस्कृताङ्गलसमन्विता। नई दिल्ली: मान्यता प्रकाशन, २०१० (प्रथमसंस्करणम्)।

विश्वनाथः। *भाषापरिच्छेदः*। सम्पा. पञ्चाननभट्टाचार्यः। कलकाताः संस्कृत पुस्तक भाण्डार, १३७७ (वङ्गाव्दः)।

--------।-------। सम्पा. आशुतोषभट्टाचार्यः। कलकाताः विजयायन, २००० (प्रथमसंस्करणम्)।

--------।-------।सम्पा. नारायणचरणशास्त्री, श्वेतवैकुण्ठशास्त्री। वाराणसी: चौखम्बा संस्कृत संस्था, २०११।

विश्वनाथपञ्चाननः। *न्यायसिद्धान्तमुक्तावली*, महादेवभट्टारब्धेन श्रीदिनकरभट्टप्रपूरितेन *दिनकरी* (प्रकाश) व्याख्यानेन श्रीरामरुद्रभट्टाचार्यारब्धेन पण्डितराजश्रीराजेश्वरशास्त्रिप्रपूरितेन *रामरुद्री* (तरङ्गिणी) व्याख्यानेन च विभूषिता। सम्पा. राजेश्वरशास्त्री। वाराणसी: चौखम्भा प्रकाशन, २०११।

शिवादित्यमिश्रः। *सप्तपदार्थी*। सम्पा. तपनशङ्करभट्टाचार्य्यः। कलकाता: संस्कृत वुक डिपो, २०१२ (प्रथमप्रकाशः)।

Guha, Dinesh Chandra. *NavyaNyaya System of Logic* (Some Basic Theories & Techniques). Varanasi: Bharatiya Vidya Prakashan, 1968.

Jhalakīkar, Bhīmācārya. *Nyāyakoṣa*. Revised & Re ed. Vāsudev Shāstri Abhyankar. Varanasi: Chaukhamba Surbharati Prakashan, 2017. (The Chaukhamba Surbharati Granthamala 523).

# CONTRIBUTORS

| NAME | DESIGNATION |
|---|---|
| **SECTION A** | |
| TAPAN SANKAR BHATTACHARYYA | Professor & Head, Department of Sanskrit, Jadavpur University. |
| SHIULI BASU | Professor, Department of Sanskrit, Jadavpur University. |
| SWARUP SINGHA | Assistant Professor, Department of Sanskrit, Vidyasagar University. |
| BIKASH SARDAR | Assistant Professor, Department of Sanskrit, Jadavpur University. |
| MRINAL KANTI GANGOPADHYAY | Former Asutosh Professor, Department of Sanskrit, University of Calcutta. |
| SARBANI GANGULI | Former Professor, Department of Sanskrit, Jadavpur University. |
| TAPATI MUKHERJEE | Former Vice-Chancellor, Sidho-Kanho-Birsha University, Purulia. |
| DEBARCHANA SARKAR | Former Professor, Department of Sanskrit, Jadavpur University. |
| INDIRA CHATTERJEE | Professor, Department of Sanskrit, Rabindra Bharati University. |
| ARUN RANJAN MISHRA | Professor, Department of Sanskrit, Pali & Prakrit, Visva-Bharati. |
| ASHOK KUMAR MAHATA | Professor, Department of Sanskrit, Jadavpur University. |
| ROBERTO MORALES-HARLEY | Director of the Department of Classical Philology,<br>Associate Professor of Sanskrit Language and Literature, |

| | |
|---|---|
| | University of Costa Rica. |
| GARGI BHATTACHARYA | Assistant Professor, Department of Sanskrit, Pali & Prakrit, Visva-Bharati. |
| RATNA BASU | Former Professor, Department of Sanskrit, University of Calcutta. |
| PARBOTY CHAKRABORTY | Professor, Department of Sanskrit, Rabindra Bharati University. |
| LOKNATH CHAKRABARTI | Associate Professor & Head, Department of Sanskrit, The Sanskrit College and University. |
| DEBDAS MANDAL | Assistant Professor, Department of Sanskrit, Jadavpur University. |
| CHINMAY MANDAL | Assistant Professor, Department of Sanskrit, Jadavpur University. |
| DEEPASHREE MONDAL | Assistant Professor, Department of Sanskrit, TDB College, Raniganj & Guest Faculty, Department of Sanskrit, Jadavpur University. |
| **SECTION B** | |
| GOPIKRISHNAN REGHU | Assistant Professor, Department of Sanskrit and Philosophy, RKMVERI. |
| DIPAK GORAI | Assistant Professor, Department of Sanskrit, Bejoy Narayan Mahavidyalaya. |
| DR. DEBASRI KHANRA | Assistant Professor, Department of Sanskrit, Swami Niswambalananda Girls' College. |
| VIVEK KARMAKAR | Assistant Professor, Department of Sanskrit, Scottish Church College. |
| BULET MANDAL | Assistant Professor, Department of Sanskrit, Diamond Harbour Women's University. |
| SWADHIN KUMAR MANDAL | Assistant Professor, Department of Sanskrit, Michael Madhusudan Memorial College. |

| | |
|---|---|
| ANJAN DAS | Assistant Professor, Department of Sanskrit, Ramkrishna Mission Vidyamandira. |
| SAMIPESHU DAS | Assistant Professor, Department of Sanskrit, Bangabasi Evening College. |
| **SECTION C** | |
| TAPAS BARMAN | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| NAYAN CHOWDHURY | Ph.D. Research Scholar, Department of Sanskrit and Philosophy, RKMVERI. |
| PROLAY NANDI | Ph.D. Research Scholar, Department of Sanskrit and Philosophy, RKMVERI. |
| PRITAM BERA | Ph.D. Research Scholar, Department of Sanskrit and Philosophy, RKMVERI. |
| SHIBSANKAR NAIYA | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SURESH GHOSH | Ph.D. Research Scholar, Department of Sanskrit and Philosophy, RKMVERI. |
| PRIYANKA SARADAR | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| RAJASI BHATTACHARYYA | Student (PG), Department of Sanskrit, Jadavpur University. |
| TIRTHADEB CHAKRABORTTY | Ph.D. Research Scholar, Department of Sanskrit, Pali & Prakrit, Visva-Bharati. |
| ACHINTYA KUMAR PAL | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| ARGHYADIP MONDAL | Student (PG), Department of Sanskrit, Jadavpur University. |
| SUTAPA MONDAL | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |

| | |
|---|---|
| RUPA BISWAS | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| PINKI KHATUN | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| DEBASISH NASKAR | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SK SAMSUDDIN ALI | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| K. SAYANTANI REDDY & SURYAKANTA SUTRADHAR | Ph.D. Research Scholar, Department of Sanskrit, The University of Burdwan & Ph.D. Research Scholar, Department of Sanskrit, Rabindra Bharati University. |
| PRIYANKA BARIK | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SWAGATA BISWAS | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SAMIR MONDAL | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SABANA YASMIN | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SUDIP SARKAR | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| RAHUL KUNDU | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| RAFIK HOSSAIN | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| শান্তনু দাস | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SUROJIT ADHIKARY | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |

| | |
|---|---|
| JOYSHREE DUTTA | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| MITHUN MONDAL | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| MOUMITA MANDAL | Ph.D. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SEULI BISWAS | M.Phil. Research Scholar, Department of Sanskrit, Jadavpur University. |
| KABITA MALICK | M.Phil. Research Scholar, Department of Sanskrit, Jadavpur University. |
| SUDIP SARDAR | M.Phil. Research Scholar, Department of Sanskrit, Jadavpur University. |
| UDAY KARMAKAR | Ex-Student, Department of Sanskrit, Jadavpur University. |
| PRATIKA SANYAL | Student (PG), Department of Sanskrit, Jadavpur University. |

